KĀVYAM.

TH

# SARASWATĪ KAṆṬHABHARAṆA

BY

## DHĀRESHVARA BHOJADEVA.

WITH

Commentaries of Rāmsinha (I-III)

AND

JAGADDHARA (IV)

EDITED

BY

PAṆḌIT KEDĀRNĀTH S'ARMĀ

AND

WĀSUDEV LAXMAṆ S'ĀSTRĪ PAṆS'ĪKAR.

Second Edition.

PUBLISHED

BY

PĀNDURANG JĀWAJĪ,

PROPRIETOR OF THE "NIRṆAYA SĀGAR" PRESS,

BOMBAY.

1934.

काव्यमाल

धारेश्वरश्रीभोज

# सरस्वतीकण्ठाभरणम् ।

रामसिंहविरचितया तृतीयपरिच्छेदान्तया
जगद्धरविरचितया च चतुर्थपरिच्छेद-
टीकया सनाथीकृतम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादतनय-
पण्डितकेदारनाथशर्मणा, मुम्बापुरवासिपणशीकरोपाह्व-
विद्वद्वरलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा च
संशोधितम् ।

द्वितीयावृत्तिः ।

तच्च
मुम्बय्यां
पाण्डुरङ्ग जावजी इत्यनेन
स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रयित्वा प्राकाश्यं नीतम् ।

शकाब्दाः १८५६, ख्रिस्ताब्दाः १९३४.

॥ श्रीः ॥

# सरस्वतीकण्ठाभरणे समुदाहृतानां पद्यानां कवयो ग्रन्थाश्च ।

**अद्भुतपुण्यः**—सुभाषितावलौ कवेरस्य 'आयाते दयिते मरुस्थलभुवां' इत्यादि पद्यं 'अद्भुतफुल्लस्य' इति नाम्ना समुपलभ्यते । शार्ङ्गधरपद्धतौ तु पद्यमेतदथ 'आयाते दयिते मनोरथशतैः' इत्यादिपद्यं चाद्भुतपुण्यनाम्नैवोल्लिखिते । अद्भुतपुण्यः, अद्भुतफुल्लश्चाभिन्नाविति प्रतीयते । सरस्वतीकण्ठाभरणे 'आयाते दयिते मरुस्थलभुवां' इत्यादि पद्यमुदाहृतम्, दशरूपके च । कवेः समयोऽस्यानिश्चितः ।

**अभिनन्दः**—कादम्बरीकथासारकर्ता काश्मीरकः कविरनुमानतः ख्रिस्तीयाष्टमशतकोत्तरभागे समुत्पन्नः । यतोऽस्य पञ्चमः पूर्वपुरुषः शक्तिस्वामी कर्कोटवंशोद्भवस्य मुक्तापीडनरपतेर्मन्त्रिप्रवर आसीदिति ग्रन्थकारः स्ववंशविस्तृतिमवर्णयद् ग्रन्थारम्भे । मुक्तापीड इति तु ललितादित्यस्यापरं नामेति राजतरङ्गिण्यां प्रसिद्धमेव, एवं स ख्रिस्तीयसप्तमशतकोत्तरभागे समासीदिति च ।

**अमरुः**—अस्य सरस्वतीकण्ठाभरणे त्रयोदशपद्यान्युदाहृतानि । सोऽयं प्रसिद्धः कविः कदा समुत्पन्न इति न ज्ञायते । किंतु श्रीमान् आनन्दवर्धनाचार्यः स्वीये ध्वन्यालोके तृतीयोद्योते 'मुक्तकेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते । तथा ह्यमरुकस्य कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव ।' इति लिखति । आनन्दवर्धनाचार्यात् प्राचीनोऽयमिति नवमख्रिस्तशताब्द्या अस्य पूर्वभवत्वं सिध्यति ।

**आनन्दवर्धनः**—सुप्रसिद्धस्य ध्वन्यालोकस्य रचयिता काश्मीरक आलंकारिकः कविः । काश्मीरेष्वयमवन्तिवर्मणः समये ख्रिस्तीयनवमशताब्द्यामासीदिति कह्लणस्य राजतरङ्गिणीतो ज्ञायते—

मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः ।
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः ॥

अस्य कवेः श्रीमता भोजदेवमहाराजेन षट् कारिका उट्टङ्किताः । १. (शृङ्गार एव

मधुरः ) पृ० ६२८,२. ( शृङ्गारे विप्रलम्भाख्ये ) पृ० ६२८,३. ( रौद्रादयो रसा दीप्ताः ) पृ० ६२८,४. ( समर्थकत्वं वाक्यस्य ) पृ० ६२८,५. ( रसवन्ति हि वस्तूनि ) पृ० ६३१,६. ( रसाक्षिप्ततया यस्य ) पृ० ६३१, ध्वन्यालोके समुदाहृतानि चाष्टौ पद्यान्युदाहरणत्वेन गृहीतानि । तानि यथा—( येन ध्वस्तमनोभवेन ) पृ० १९२, ( तस्या विनापि हारेण ) पृ० २२२ ( अनुरागवती संध्या ) पृ० ३३२ ( कस्स व ण होइ रोसो ) पृ० ४५२, ( प्राप्तश्रीरेष कस्मात् ) पृ० ४५५,७१३. ( शेषो हेमगिरिस्त्वं च ) पृ० ४७५, ( कुविआओ वि पसण्णाओ ) पृ० ६७१.

**उदात्तराघवकर्ता**—कवेरस्य नामविषये कालविषये च न किमपि ज्ञायते । धनिकेन दशरूपके ( ४।२६ ) उदाहृतं 'मृगरूपं परित्यज्य' इत्यादिपद्यमत्रापि समुदाहृतम् ( पृ. ७३९ ) ।

**कालिदासः**—अत्र महाकवेरस्य रघुवंश–कुमारसंभव–मेघदूतकाव्येभ्यः, शाकुन्तलविक्रमोर्वशीयनाटकाभ्यां चोद्धृतानि पद्यानि । रघुवंशीयानि ४८ अष्टचत्वारिंशत् पद्यानि, कुमारसंभवाच्च ५३ त्रिपञ्चाशत् पद्यानि, मेघदूताच्च १४ चतुर्दश पद्यानि, अभिज्ञानशाकुन्तलनाटकाच्च ३७ सप्तत्रिंशत् पद्यानि, विक्रमोर्वशीयनाटकाच्च १६ षोडश पद्यानि समुदाहृतानि प्राप्यन्ते । सोऽयं पञ्चम्यां खिस्तीयशताब्द्यां समुदभवदिति बहूनां पाश्चात्यानां पौरस्त्यानां च विदुषां मतम् ।

**कुमारदासः**—जानकीहरणकर्ता सिंहलद्वीपस्थः कविः । अयं कालिदाससमकालिक इति किंवदन्ती ॥

'कमले कमलोत्पत्तिः श्रूयते नापि दृश्यते ।
बाले तव मुखाम्भोजे कथमिन्दीवरद्वयम् ॥'

इति पद्यं चोभयकविकर्तृकं प्रसिद्धम् । क्षेमेन्द्रेणौचित्यविचारचर्चायां 'अयि विजहीहि दृढोपगूहनं' इत्यादि पद्यं कुमारदासनाम्ना लिखितमत्रापि प्राप्यते ( पृ० १५१) ।

**चण्डकः**—'च्युतामिन्दोर्लेखां' ( पृ० ६०८ ) इत्यादि पद्यं सुभाषितावलौ चण्डकनाम्ना, शार्ङ्गधरपद्धतौ च क्रीडाचन्द्रनाम्ना प्राप्यते । समयोऽस्यानिश्चितः ।

**चाणक्यः**—'शैले शैले न माणिक्यं' इत्यादि पद्यं ( पृ० २५४ ) चाणक्यशतकादुद्धृतमत्रोदाहृतम् । अशोकपितामहश्चन्द्रगुप्तः खिस्ताब्दारम्भात्पूर्वं सप्तविंशत्यधिकशतत्रयपरिमितेषु वर्षेषु राज्यं चकारेति सिद्धमेव । कौटिल्यापरनामधेय-

श्चाणक्यस्तन्मन्त्री तदानीमासीदिति निश्चितमेव । केनापि विदुषा चाणक्यनाम्नैव तदेतन्नीतिशतकं विरचितं भवेद् यदधुना बालकैः पठ्यते ।

**चित्रमः, चित्रमो वा**—अस्य चित्रप इति छित्तप इति वा नामेति ऑफ्रेक्ट-पण्डितः । शार्ङ्गधरपद्धतौ 'छित्रम' इति, गणरत्नमहोदधौ तु चित्तप इति नाम समुपलभ्यते । 'कल्पान्ते शमितत्रिविक्रम' (पृ० ३६१) इति पद्यमेकमेवोपलब्धम् । कालविषयेऽस्य न किमपि ज्ञातम् ।

**जैमिनिसूत्रवृत्तिः**—'जरद्गवः कम्बलपादुकाभ्यां' (पृ० ३६) इत्यादिपद्यं मीमांसावृत्तेरुद्धृतं भोजदेवेन ।

**दण्डी**—काव्यादर्शः, दशकुमारचरितम्, छन्दोविचितिश्चेति ग्रन्थत्रयस्य निर्माता षष्ठे शतके समुत्पन्नः । सरस्वतीकण्ठाभरणे काव्यादर्शात् ४१ एकचत्वारिंशत् कारिकाः १६४ चतुःषष्ठ्युत्तरैकशतमुदाहरणानि च संकलितानि श्रीमता भोजदेवेन । प्रायो ग्रन्थेऽस्मिन् दण्डिविरचितस्य काव्यादर्शस्यैव विस्तरः ।

**दीपकः**—सुभाषितावलौ 'यदि स्मरामि तां तन्वीं' इति पद्यमुपलभामहे । अत्राप्येतत् पद्यमुदाहृतम् (पृ० ३०४) ।

**द्रोणपर्व**—'ततः कुमुदनाथेन' पृ० १३४ इत्यादि पद्यं महाभारतीयद्रोणपर्वत उद्धृत्योदाहृतं भोजदेवेन ।

**धनिकः**—धनिको धनञ्जयश्च विष्णुतनूजौ भ्रातरौ मुञ्जसमकालिकौ दशमशतकोत्पन्नौ । दशरूपकस्य कर्ता धनंजयः, तदालोकस्य कर्ता च धनिकः । दशरूपकालोकसरस्वतीकण्ठाभरणयोः षोडशोदाहरणानि समानि ।

**धाराकदम्बः**—'बाले मालेयमुच्चैर्न' पृ० २४८ इति पद्यं सुभाषितावलौ शार्ङ्गधरपद्धतौ च धाराकदम्बनाम्ना प्राप्यते ।

**नमिसाधुः**—रुद्रटालंकारस्य टीकाकर्ता । सरस्वतीकण्ठाभरण उदाहृतानि चत्वार्युदाहरणानि नमिसाधोष्टीकायामुपलभ्यन्ते । तानि यथा—'अयं पद्मासनासीनः' पृ० ४२, 'चन्द्रायते शुक्लरुचाथ' पृ० ४११,१९ 'यस्या बीजमहंकृतिः' पृ० ४२३, 'यश्च निम्बं परशुना' पृ० ४७७, सोऽयं नमिसाधुः १०६९ खिस्तवर्षे टीकां रचितवानिति टीकासमाप्तिश्लोकाज् ज्ञायते ।

**नारायणः**—वेणीसंहारनामकनाटकस्य रचयिता। ध्वन्यालोकेऽपि तदीयानि पद्यानि समुपलभ्यन्त इति नवमशतकात् पूर्वतनोऽयं कविः। सरस्वतीकण्ठाभरणे ११ एकादशपद्यान्युदाहरणरूपेण संप्राप्यन्तेऽस्य।

**निद्रादरिद्रः**—'जाने कोपपराङ्मुखी प्रियतमा' पृ० ६०८ इति पद्यं सुभाषितावलौ निद्रादरिद्रकर्तृकत्वेन लिखितम्। तदेतत्पद्यं काव्यप्रकाशेऽपि श्रीमता मम्मटाचार्येण समुदाहृतम्।

**निशानारायणः**—शार्ङ्गधरपद्धतौ 'अक्षुद्रारिकृताभिमन्यु' पृ० ५८६, 'उत्तिष्ठन्त्या रतान्ते' पृ० १६१, पृ० ६२०, इति पद्यद्वयी निशानारायणनाम्नोट्टङ्किता।

**पञ्चस्तवीकर्ता**—कवेर्नाम न लब्धम्। काव्यमालायां मुद्रितैवेयं पञ्चस्तवी। 'चञ्चत्काञ्चनकाञ्चयो' पृ० २४९, 'लक्ष्मीवशीकरणचूर्ण' पृ० ७१३ इति पद्यद्वयी सरस्वतीकण्ठाभरणे समुदाहृता पञ्चस्तव्यां प्राप्यते।

**प्रभाकरः**—'दिङ्मातङ्गघटाविभक्त' पृ० ११४, १७५, ४१९ इति पद्यं क्षेमेन्द्रस्यौचित्यविचारचर्चायां प्रभाकरस्येति संलिखितम्।

**प्रवरसेनः**—सेतुबन्धकाव्यकर्ता। ३१ एकत्रिंशत् पद्यानि सेतुबन्धादुद्धृतानि सरस्वतीकण्ठाभरणे। सोऽयं कविः कैनिंगहाममतेन ४३२ ख्रिस्ताब्देऽर्थात् पञ्चमशताब्द्यामुत्पन्नः काश्मीरेषु।

**बाणः**—महाकवेरस्य सप्तमशतकोत्पन्नत्वं सुप्रसिद्धम्। श्रीमान् भोजदेवो द्वितीये परिच्छेदे—

'यादृग्गद्यविधौ बाणः पद्यबन्धे न तादृशः।
गत्यां गत्यामियं देवी विचित्रा हि सरस्वती॥'

इति बाणविषये लिखति। सरस्वतीकण्ठाभरणे कादम्बरीतः—'हर इव जितमन्मथो' पृ० १५४ इति गद्यभागः, 'दिशामलीकालकभङ्गतां' इति पद्यं च समुदाहृते। चण्डीशतकाच्च—'विद्राणे रुद्रवृन्दे' पृ० २४७ 'नीते निर्व्याजदीर्घा' पृ० २४७, 'प्राक् कामं दहता कृतः परिभवो' पृ० ७०० इति पद्यत्रयी समुदाहृता। सुभाषितावलौ शार्ङ्गधरपद्धतौ च बाणकर्तृकत्वेनोल्लिखितं पद्यद्वयं—'सर्वाशारुधि दग्धवीरुधि' पृ० २४८, ७११, 'उद्यद्बर्हिपि दर्दुरारवपुषि' पृ० २४८, अत्रोदाहृतम्।

**बृहदारण्यकोपनिषद्**—अस्या उपनिषदः 'यस्मिन् पञ्च पञ्च जनाः' पृ० २६, इति पद्यमथ 'दमं दानं दयां शिक्षेः' पृ० ३८५ इति मन्त्रपूर्णं पद्यं चोद्धृत्योदाहृते भोजदेवेन ।

**ब्रह्मबिन्दूपनिषद्**—अस्याश्चोपनिषदः—'एक एव हि भूतात्मा' पृ० ४०४ एष श्लोकः समुद्धृत्योदाहृतः ।

**भट्टकपर्दी**—सुभाषितावलौ 'अम्बा तुष्यति न मया' पृ० ५२४ इति पद्यं भट्टकपर्दिनाम्नोट्टङ्कितम् ।

**भट्टिः**—भट्टिकाव्याद् भोजदेवेन षट् पद्यान्युद्धृतानि । ऑफ्रेक्टपण्डितमतेन भट्टिः, भट्टस्वामी, भर्तृस्वामी चैकस्यैव विदुषो नामानि । वेबरमतानुसारं भट्टिकाव्यं षष्ठ्यां सप्तम्यां वा शताब्द्यां श्रीधरसेननामकस्य राज्ञः पुत्रे वल्लभीं शासति तत्रैव रचितं भट्टिकविनेति सुभाषितावलौ डॉ. पीटरसनः संलिखति ।

**भरतः**—नाट्यशास्त्रात् सरस्वतीकण्ठाभरणे कारिकाद्वयी पञ्चमपरिच्छेदारम्भे संगृहीता 'रतिर्हासश्च शोकश्च' इति, 'स्तम्भस्तनूरुहोद्भेदः' इति च । कालोऽस्याप्यनिश्चित एव ।

**भर्तृहरिः**—नीतिशतकात् 'इतः स्वपिति केशवः' पृ० ४६० इति पद्यं संकलितं भोजदेवेन । एतदीयं वाक्यपदीयं हेलाराजपुञ्जराजाभ्यां विरचितया टीकया सनाथमिति हेलाराजात् प्राग्भवत्वमस्यैवं हेलाराजस्य कल्हणात् प्राचीनत्वमिति बहु प्राचीनोऽयम् । अस्य विषये जयपुरस्थानां प्रधानराज्याधिकारिणां **रायबहादूर पुरोहित श्रीगोपीनाथ एम्. ए., सी. आई. ई.** इति सुगृहीतनामधेयैः संलिखिता शतकत्रयभूमिका समालोच्या भावुकैः ।

**भल्लटः**—भल्लटशतककर्ता । 'किं जातोऽसि चतुष्पथे' पृ० ४५८ इति पद्यं सुभाषितावलौ भल्लटनाम्नोपलब्धम् ।

**भवभूतिः**—उत्तररामचरित-महावीरचरित-मालतीमाधवनाटकानां कर्ता । डॉक्टरश्रीरामकृष्णगोपालभाण्डारकरमतेनाष्टमशताब्द्याः पूर्वभागे समुत्पन्नः । सरस्वतीकण्ठाभरण उत्तररामचरिताद् २२ द्वाविंशतिः पद्यानाम्, महावीरचरिताच्च पद्यानां १६ षोडशी, मालतीमाधवाच्च ३५ पञ्चत्रिंशत् पद्यान्युदाहृतानि भोजदेवेन ।

**भामहः**—आलंकारिकोऽयं सुप्रसिद्धः । अस्य ग्रन्थोऽपि प्रकाशित एव । ध्वनिकारादानन्दवर्धनादयं प्राचीनः । 'किंशुकव्यपदेशेन' इति पद्यं पृ० ४६९ सुभाषितावलौ भामहनाम्नोल्लिखितम् ।

**भारविः**—किरातार्जुनीयकर्ता । सप्तमशताब्द्यामुल्लिखिते द्वितीयस्य पुलकेशिनः शिलालेखे कवेरस्य कालिदासस्य च नामोपलब्ध्या ततः प्राक्तनत्वमस्य सिध्यति । भोजदेवेन स्वग्रन्थे ३८ अष्टात्रिंशत् पद्यान्युद्धृतानि ।

**भासः**—कालिदासादयं प्राचीन इति बहूनां मतम् । अस्य नाटकचक्रं महामहोपाध्यायगणपतिदेवशास्त्रिभिः सुष्ठु संपादितं प्रकाशितं च ।

**भोजराजः**—'कियन्मात्रं जलं विप्र' इति पद्यं पृ० १२२,२९८ शार्ङ्गधरपद्धतौ भोजराजनाम्ना लभ्यते । सोऽयमस्माकं सरस्वतीकण्ठाभरणकर्ता भोजदेवः । परंत्वेतत्पद्यं न भोजस्य स्वोपज्ञमेवेति ज्ञायते । यतो राजशेखरः स्वीयकाव्यमीमांसायां श्लोकमेनमुदाजहार । राजशेखरश्च भोजात् प्राचीनः ।

**मञ्जीरः**—'अन्यतो नय मुहूर्तमाननं' इति पद्यं (पृ० ४३७) सुभाषितावलौ मञ्जीरनाम्ना लिखितम् ।

**महानाटककर्ता**—महानाटककर्ता हनुमान्नामकविः श्रीरामदूतो हनुमान् वेति न निश्चितम् । ग्रन्थेऽस्मिन् बहवः श्लोका ग्रन्थान्तरीया अपि सन्तीति समालोचकभणितिः । एवमपि प्रवादो यदेतन्नाटकं समुद्रे शिलोल्लिखितप्रक्षिप्तं भोजदेवेनैव संलब्धं प्रकाशितं च । संभाव्यतेऽत एवास्माभिरपि यदत्र शीर्णो भागः प्राक्तनैः प्रसिद्धैः पद्यैः पूरितो भवेत् केनचित् कविनेति ।

**माघः**—शिशुपालवधकाव्यस्य रचयिता सुप्रसिद्धो माघः कविः खिस्ताब्दीयनवमशतकात्कथमपि नार्वाचीनः । यतो ध्वन्यालोके माघकाव्यादुदाहृतानि पद्यानि श्रीमतानन्दवर्धनाचार्येण । ४४ चतुश्चत्वारिंशतपद्यान्युदाहरणरूपेण सरस्वतीकण्ठाभरणे भोजदेवेनापि संकलितानि । कवेरस्य विशेषवर्णनं द्रष्टुकामैरस्मत्पितृचरणैः श्रीमन्महामहोपाध्यायदुर्गाप्रसादमहोदयैः संपादितस्य माघस्य भूमिका विलोक्या ।

**मालवरुद्रः**—'अभिनववधूरोषस्वादुः' पृ० १३१, ७२२ इत्यादि पद्यं मालवरुद्रनाम्नोदाहृतं क्षेमेन्द्रेणौचित्यविचारचर्चायाम् ।

**मुञ्जः**—वाक्पतिरिति प्रसिद्धोऽयं मुञ्जोऽस्माकं ग्रन्थकर्तुर्भोजदेवस्य ज्येष्ठः पितृव्यः । दशरूपकभूमिकायां हालपण्डितः सुष्ठु वर्णितवान् विषयमेनम् । ऑफ्रेक्टपण्डितमतेन 'सौजन्याम्बुनिधे' पृ० ६० श्लोकोऽयं मुञ्जकृतः । परं श्लोकेऽस्मिन् मुञ्जं लक्ष्यीकृत्यैवोक्तिः । सेयमुक्तिर्भोजदेवस्य संभाव्यते ।

**मेण्ठः**—हयग्रीववधनामकस्य काव्यस्य रचयिता काश्मीरकोऽयं महाकविः ।

'मधुविकचसितोत्पलावतंसं' पृ० ३३८ इत्यादि पद्यं सुभाषितावलौ मेण्ठनाम्ना प्राप्यते। क्षेमेन्द्रः सुवृत्ततिलके हयग्रीववधस्य प्रथमं पद्यमेवमाचख्यौ—

'आसीद्दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः।
प्रथयन्ति बलं बाह्वोः सितच्छत्रस्मिताः श्रियः॥'

राजतरङ्गिण्यां तृतीये तरङ्गे कह्लणपण्डितः कविमेनं मातृगुप्तकालिकं कथयति। मातृगुप्तश्च विक्रमादित्यकाले समभवदित्यस्य पञ्चमशतकोत्पन्नत्वं सिध्यति।

**यशोवर्मा**—'यत्त्वन्नेत्रसमानकान्ति' पृ० ४१२।७२५ इत्यादि पद्यं क्षेमेन्द्रस्य सुवृत्ततिलके यशोवर्मनाम्नोल्लिखितम्। 'कृतककुपितैर्बाष्पाम्भोभिः' पृ० ६९६ इत्यादि च पद्यं सुभाषितावलौ यशोवर्मण एव। सोऽयमष्टमशताब्द्यां कान्यकुब्जेश्वर आसीत्।

**राजशेखरः**—बालरामायणनाटकस्य, विद्धशालभञ्जिकाया नाटिकायाः, कर्पूरमञ्जरीनामकसट्टकस्य प्रचण्डपाण्डवापरनामकबालभारतनाटकस्य, काव्यमीमांसाख्यसाहित्यग्रन्थस्य च रचयिता यायावरीयः प्रसिद्धः कविः खिस्तीयदशमशतकप्रारम्भे महेन्द्रपालनामकभूपतेः सभायामासीत्। भोजदेवेन बालरामायणनाटकात् ५ पञ्च पद्यानि, विद्धशालभञ्जिकायाश्च पद्यत्रयमुदाहृतं स्वालंकारग्रन्थे।

**रुद्रटः**—काव्यालंकारस्य रचयितालंकारिकः कविर्भोजदेवात्प्राचीनः। १९ एकोनविंशतिपद्यान्युदाहृतानि ग्रन्थादस्य भोजदेवेन।

**लक्ष्मीधरः**—'कम्पन्ते कपयो भृशं' पृ० ३१६ इत्यादि पद्यं शार्ङ्गधरपद्धतौ लक्ष्मीधरनाम्ना प्राप्यते।

**वामनः**—काव्यालंकारसूत्रकर्ता प्रसिद्धः काश्मीरको विद्वान् खिस्ताब्दीयनवमशतकान्नार्वाचीनः। यतोऽस्य ध्वन्यालोकलोचने नामोपलभ्यत इति। २२ द्वाविंशतिधोदाहृतानि भोजदेवेनास्य ग्रन्थे प्राप्यमाणानि पद्यानि।

**वाक्पतिः**—गौडवहो नामकः प्राकृतकाव्यकर्ता। गौडवहो काव्यात् उद्धृता 'उव्वहइ दइ अगदि याह' पृ० ५७६ इत्यादि गाथा समुदाहृता भोजदेवेन। कवेरस्य यशोवर्मराज्यकालः पञ्चमशताब्दी खिस्तीया कालोऽवगन्तव्यः।

**विकटनितम्बा**—सेयं प्रसिद्धा कवयित्री। 'किं द्वारि दैवहतके' पृ० १९२, ७०९, ७१८ इत्यादि पद्यं त्रिधोदाहृतं भोजदेवेन। समयोऽस्या अद्याप्यनिश्चितः।

**विजयपालः**—'अमृतममृतं चन्द्रश्चन्द्रः' पृ० २५४ इत्यादि पद्यं सुभाषितावलौ विजयपालनाम्ना प्राप्यते ।

**विज्जिका**—( विज्जका वा ) इयमपि स्त्री कविः । अस्याश्चापरं 'मारुला' इति नाम

'नीलोत्पलदलश्यामां विज्जकां मामजानता ।
वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती ॥'

इत्यपि पद्यं सुभाषितावलौ प्राप्यते । ततो दण्डिन अर्वाचीनेयमिति सिध्यति । अस्याः 'उन्नमय्य सकचग्रहमास्यं' पृ० ८७, ६०१ इत्यादि पद्यम्, 'विलासमसृणोल्लसन' पृ० ६०२ इत्यादि पद्यं च सुभाषितावलावुद्धृते ।

**विद्यापतिः**—'सुभ्रूस्त्वं कुपितेत्यपास्त' पृ० १९१ इत्यादि पद्यं शार्ङ्गधरपद्धतौ विद्यापतिनाम्ना प्राप्यते ।

**विशाखदत्तः**—मुद्राराक्षसनाटककर्ता । अस्य 'उवरि घणं घणपडिअं' इत्यादि प्राकृतं पद्यं सरस्वतीकण्ठाभरणे संस्कृतभाषोपनिबद्धं 'उपरि घनं घनपटलं' पृ० ३५३ इति प्राप्यते ।

**विष्णुशर्मा**—पञ्चतन्त्रस्य रचयिता । 'श्रूयतां धर्मसर्वस्वम्' पृ० ७१ इत्यादि पद्यमुदाहृतं भोजदेवेन । पञ्चतन्त्रे याज्ञवल्क्यस्मृतेर्नामोपलभ्यत इति सोऽयं कविः ख्रिस्तीयतृतीयशताब्द्याः परतश्चतुर्थशताब्द्याश्च पूर्वं समुत्पन्न इति प्रतीयते ।

**बिह्लणकविः**—महाकविरयं ख्रिस्तीयैकादशशताब्द्यामुत्पन्नः । अस्य चौरीसुरतपञ्चाशिकातः 'अद्यापि तत्कनककुण्डल' पृ० १३६ इत्यादि पद्यमुदाहृतं ग्रन्थकर्त्रा ।

**शूद्रकः**—मृच्छकटिकप्रकरणस्य कर्ता । स्कन्दपुराणस्य कुमारिकाखण्डानुसारेण कलिवर्षेषु ३२९० वर्षेषु व्यतीतेषूद्भवन् । मार्समैननामकपाश्चात्यविदुषा लिखितस्य भारतेतिहासस्यानुसारं मगधशासकः सिपरकनामको राजमन्त्री १९१ ख्रिस्तवर्षे शूद्रकेण हत इति शूद्रको द्वितीयख्रिस्तशताब्द्यामासीत् । 'पलिघ्नले लम्बदशाकपालं' पृ० ६९२ इत्यादि पद्यं 'जदिच्छशे' इत्यादि मृच्छकटिके प्राप्यते ।

**श्रीहर्षः**—रत्नावलीनाटिकायाः, प्रियदर्शिकानाटिकायाः, नागानन्दनाटकस्य, च कर्ता सुप्रसिद्धः कान्यकुब्जेश्वरो बाणमयूरादिप्रसिद्धकवीनामाश्रयभूतः सप्तमशतकोत्पन्नः । रत्नावल्या नव पद्यानि, नागानन्दस्यैकं पद्यं 'दृष्टा दृष्टिमधो ददाति'

६६९ इत्यादि समुदाहृतं श्रीमता भोजदेवेन। [ तदेतदाश्चर्यं यद् भोजदेवेन श्रीहर्षविरचितात् नैषधीयचरितात् पद्यमेकमपि नोदाहृतम् । ]

**सातवाहनः**—गाथासप्तशतीकर्ता प्रसिद्धः शालिवाहनो राजा शकप्रवर्तकः। गाथासप्तशत्याः ११३ त्रयोदशोत्तरमेकशतं गाथानामुदाहृतं भोजदेवेन। अस्माभिर्योदाहरणानुक्रमणिका योजिता तत्रैता गाथाः सातवाहनस्य गाथासप्तशतीस्था इत्यस्माकं सहृदयैः साहित्याचार्यभट्टश्रीमथुरानाथैः साहित्याध्यापकैः सूचिताः। महाभागैरेभिः गाथासप्तशती संस्कृतभाषायामार्याभिरनूदिता, एवं व्यङ्ग्यार्थबोधिनी टीकापि विरचितेति हर्षास्पदम्

'अणुमरणपत्थिआए' गा. स. ७।२३
'अण्णमहिलापसंगं' गा. स. १।४८
'अण्णह न तीरइच्चिअ' गा. स. ४।४९
'अण्णुह णाहं कुविआ' गा. स. २।८४
'अत्तात्तह रमणिज्जं' गा. स. १।८
'अमअमअगअणसेहर' गा. स. १।१६
'आलाओ मा दिज्जउ' गा. स. ६।१४
'आलोअंति दिसाओ' गा. स. ६।४६
'उद्धच्छो पिअइ जलं' गा. स. २।६१
'गम्मिहिसि तस्स पासं' गा. स. ७।७
'घरिणिघणत्थणपेल्लण' गा. स. ६।६१
'घरिणीए महाणसकम्मलग्ग' गा. स. १।१३
'चत्तर घरिणी पिअदंसणाअ' गा. स. १।३६
'चिंताणिअदइअसमागमम्मि' गा. स. १।६०
[ 'पाअडिअणेह'='पअडिअसणेह' ] गा. स. २।९९
'सा तइ सहत्थदिण्णं' गा. स. २।९४

[ टीकाकर्त्रोः श्रीरामसिंहो नेपालाभिजनः, जगद्धरश्च चतुर्थपरिच्छेदटीकाकर्ता काश्मीरकः सुप्रसिद्धो वासवदत्तादिटीकाकर्तेति ज्ञेयम् ]

**विशेषतो द्रष्टव्यम्**—सरस्वतीकण्ठाभरणे यान्युदाहरणानि यत्र उद्धृतानीति सूचिका **Col. G. A. Jacob** नाम्ना पाश्चात्यविदुषा भूयसा श्रमेण विरचितास्माकं सहृदयैः **Dr. F. W. Thomas M. A., Ph. D.** महोदयैः इण्डियाऑफिसपुस्तकालयाध्यक्षैः सकृपं संप्रेषिता । तदाधारेण अथ **Dr. Peterson M. A.** नामकविदुषा रचितायाः सुभाषितावलीभूमिकायाः संगृह्यैषा कविनामसूची निर्मितास्माभिः । वयं **डॉक्तर तामस**—महोदयाय धन्यवादान् वितरामः ।

संपादकौ ।



॥ श्रीः ॥

# परमारवंश्यो भोजदेवः ।

परमारवंश्यानां प्राचीनशिलालेखादिभिः, परिमलापरनामधेयपद्मगुप्तरचितान्नवसाहसाङ्कचरितात् काव्याच्चैवं ज्ञायते यदेतद्वंशीयमूलपुरुषो वासिष्ठादग्निकुण्डादर्बुदाचलपर्वते प्रादुरासीदिति ।

सरस्वतीकण्ठाभरणेऽपि नायकगुणेषु पुंसो महाकुलीनत्वोदाहरणे श्रीभोजदेवः स्ववंशोत्पत्तिमेवमुल्लिलेख—

'वासिष्ठैः सुकृतोद्भवोऽध्वरशतैरस्त्यग्निकुण्डोद्भवो
भूपालः परमार इत्यधिपतिः सप्ताब्धिकाञ्चेर्भुवः ।
अद्याप्यद्भुतहर्षगद्गदगिरो गायन्ति यस्योद्भटं
विश्वामित्रजयोर्जितस्य भुजयोर्विस्फूर्जितं गुर्जराः ॥'

सोऽयं परमारवंशोऽग्निकुलत्वेनात्मानं ख्यापयति । परमाराः, प्रतीहाराः, चालुक्याः, चाहमानाश्चेति चतुर्विधाः क्षत्रिया नानाशाखासु विभक्ताः स्वमग्निवंशोद्भवं मन्यन्ते । यद्यपि परमाराणामेवाग्निवंशोद्भवत्वं सिध्यति यतो विविधेषु शिलालेखेषु चालुक्यादीनां सूर्यवंशोद्भवत्वं वर्णितम् । तथापि पृथ्वीराजरासोनाम्नि डिङ्गलाख्यभाषाग्रन्थे चतुर्विधा अप्येते क्षत्रिया अग्निवंश्यत्वेन वर्णितास्तथैवाधुना प्रसिद्धाश्च ।

---

१. 'अस्त्यूर्वीध्रः प्रतीच्यां हिमगिरितनयः सिद्धदाम्पत्यसिद्धेः
स्थानं च ज्ञानभाजामभिमतफलदोऽखर्वितः सोऽर्बुदाख्यः ।
विश्वामित्रो वसिष्ठादहरत बलतो यत्र गां तत्प्रभावा-
ज्जज्ञे वीरोऽग्निकुण्डाद्रिपुबलनिधनं यश्चकारैक एव ॥
मारयित्वा परान् धेनुमानिन्ये स ततो मुनिः ।
उवाच परमाराख्यः पार्थिवेन्द्रो भविष्यसि ॥'
एपिग्राफिया इण्डिकाप्रथमपुटके पञ्चमभागः—उदयपुरप्रशस्तिः ।

२. नवसाहसाङ्कचरितकाव्येऽप्येकादशे सर्गे—

'ब्रह्माण्डमण्डपस्तम्भः श्रीमानस्त्यर्बुदो गिरिः ।
उपोढहंसिका यस्य सरितः सालभञ्जिकाः ॥ ४९ ॥

..........................................

..........................................

अतिस्वाधीननीवारफलमूलसमित्कुशम् ।
मुनिस्तपोवनं चक्रे तत्रेक्ष्वाकुपुरोहितः ॥ ६४ ॥
हृता तस्यैकदा धेनुः कामसूर्गाधिसूनुना ।
कार्तवीर्यार्जुनेनेव जमदग्नेरनीयत ॥ ६५ ॥
स्थूलाश्रुधारासंतानस्नपितस्तनवल्कला ।
अमर्षपावकस्याभूद्भर्तुः समिदरुन्धती ॥ ६६ ॥
अथाथर्वविदामाद्यः समन्त्रामाहुतिं ददौ ।
विकसद्विकटज्वालाजटिले जातवेदसि ॥ ६७ ॥
ततः क्षणात्सकोदण्डः किरीटी काञ्चनाङ्गदः ।
उज्जगामाग्नितः कोऽपि सहेमकवचः पुमान् ॥ ६८ ॥
दूरं सन्तमसेनेव विश्वामित्रेण सा हृता ।
तेनानिन्ये मुनेर्धेनुर्दिनश्रीरिव भानुना ॥ ६९ ॥
ततस्तापसकन्याभिरानन्दाश्रुलवाङ्कितः ।
कपोलः पाणिपर्यङ्कात्साश्रुलेखादपास्यत ॥ ७० ॥

परमारवंशवर्णनम्—

परमार इति प्रापत्स मुनेर्नाम चार्थवत् ।
मीलितान्यनृपच्छत्रमातपत्रं च भूतले ॥ ७१ ॥
प्रवर्तितातिविस्तीर्णसप्ततन्तुपरम्परः ।
पुराणकूर्मशेषं यश्चकाराम्भोनिधेः पयः ॥ ७२ ॥

..........................................

..........................................

वंशः प्रववृते तस्मादादिराजान्मनोरिव ।
नीतः सुवृत्तैर्गुरुतां नृपैर्मुक्ताफलैरिव ॥ ७४ ॥'

इत्यादि—

परं शिलालेखादिप्रमाणैः केवलं परमाराणामेवाग्निवंश्यत्वं सिध्यति । अन्येषां च सूर्यवंश्यत्वं चन्द्रवंश्यत्वं च । परमारवंशे मालवदेशस्याधिपत्यमासीदिति तदन्ववायानां मालवाधीशत्वेनापि प्रसिद्धिः । वंशेऽस्मिन् उपेन्द्रः ( कृष्णराजापरनामधेयः ) अनुमानतो 800 A. D.–825 A. D. काले प्रसिद्धो बभूव ।

**मालवाधीशानां परमाराणां वंशवृक्षः ।**

| संख्या | राजनाम | ज्ञातसमयः ( A. D. ) | विशेषता । |
|---|---|---|---|
| १. | उपेन्द्रः | ( ८००–८२५ ) | |
| २. | वैरिसिंहः १ | ( ८२५–८५० ) | |
| ३. | सीयकः १ | ( ८५०–८७५ ) | |

तत एवास्मिन् वंशे समुद्भूतानां राज्ञां नामानि शिलालेखादिषूट्टङ्कितान्यधिगम्यन्ते।

| | | |
|---|---|---|
| ४. | वाक्पतिः १ ( ८७५–९१४ ) | |
| ५. | वैरिसिंहः २ ( वज्रटापरनाधेयः ) ( ९१४–९४१ ) | असौ धारानगर्यां राज्यं स्थापितवान् । |
| ६. | सीयकः २ { ( हर्षदेवा- ) परनामा } | एष राष्ट्रकूटवंशोद्भवं खोट्टिगं पराजितवान् (971–A.D.) |
| ७. | महाराजाधिराजो वाक्पतिः २ ( मुञ्जापरनामा ) ( ९७७–९९७ ) | अतिप्रसिद्धोऽयं राजा चेदिवंशोद्भवं राजानं जितवान् ( ९७५–१००० ) |
| ८. | सिन्धुराजः (सिन्धुल इति ख्यातः) ( ९९७–१११० ) | नवसाहसाङ्कचरितकाव्यस्य नायकः । |
| ९. | भोजदेवः १ ( १०१०–१०५५ ) | सरस्वतीकण्ठाभरणस्य रचयिता चालुक्यगुर्जरस्य भीमदेवस्य समसामयिकः । ( १०२२–६३ ) |

---

एवमुपेन्द्रमारभ्य भोजदेवपर्यन्तं वंशपरम्परा । ऐतरेयब्राह्मणानुसारं भोजशब्दो राजवाचकः । वैदिककाले भोजशब्देन राज्ञां परिचय आसीत् । सत्यव्रतसामश्रमिणां मतेन भोज इति वंशनाम । यद्वा तद्वा भवतु भोजशब्दार्थः परंत्वेतत्तु निश्चितमेव यद् भोजशब्दो राज्ञो राजवंश्यस्य वा बोधक आसीत्तदानीम् । सोऽयमस्माकं सर-

स्वतीकण्ठाभरणकर्ता भोजदेवः १०१० खृस्तीयकालमारभ्य १०५५ खृस्तीयसंवत्सरपर्यन्तं धारानगर्यां राजमान आसीत्। महाराजाधिराजस्यास्य स्वहस्ताक्षरालंकृतं दानपत्रत्रयमद्यावधि समुपलब्धम्। असौ भोजदेवः कविः कवीनां संरक्षको वास्तवं दानवीर आसीत्। आबालवृद्धं विक्रमादित्यनामेव भोजराजनाम्नापि सुविदितः। मूलमस्य विद्वत्समादर एवेति न नामाविदितं कस्यापि संस्कृतभाषाभाषिणः। 'प्रत्यक्षरं लक्षं ददौ' इति वारंवारं समुल्लिखन् बल्लालपण्डितः स्वीयभोजप्रबन्धे प्राक्तनानपि विदुषो भोजसमकालिकानेव विदधानस्तेषां राजसभायां समुचितं समादरं रारटीति।

कल्हणपण्डितोऽपि—

**'स च भोजनरेन्द्रश्च दानोत्कर्षेण विश्रुतौ।**
**सूरी तस्मिन्क्षणे तुल्यं द्वावास्तां कविबान्धवौ॥'**

(राजतरङ्गिणी ७।२५९)

एवं भोजसमानकालिकः साहित्यविद्यासूत्रधारः श्रीमम्मटपण्डितोऽपि

'भोजनृपतेस्तत्त्यागलीलायितम्।'

इति काव्यप्रकाशे दानवीरमेनं विद्वज्जनवल्लभं स्तौति। अस्मद्गुरुचरणानां जयपुरराजकीयसंस्कृतपाठशालाध्यक्षाणां महामहोपाध्यायश्रीदुर्गाप्रसादद्विवेदिमहोदयानां तु मतेन 'प्रत्यक्षरं लक्षं ददौ' इत्यस्य 'प्रत्यक्षरं लक्ष्यं ददौ' इति परिवर्तनं कियन्तमतिशयं धत्ते नामेति विद्वद्भिर्विशेषतो कवयितृभिर्विचार्यं नाम।

यतो राजा यदि स्वयमेवंविधविधो भवेद् यः प्रत्यक्षरं लक्ष्यं दद्यात्तदा तल्लक्ष्यमूल्यतो लक्षस्य द्रविणस्य नातिरेकः।

भोजदेवसमये काष्ठवाहकोऽपि संस्कृतभाषापरिचित आसीत्। सरस्वतीकण्ठाभरणे—

**'भूरिभारभराक्रान्त बाधति स्कन्ध एष ते।**
**न तथा बाधते स्कन्धो यथा बाधति बाधते॥'**

इति स्वयमुदाहरन्नस्माकं प्रियतरो दानविश्रुतो भोजः स्वस्य संस्कृतविद्याप्रेमोत्तम्भयामास।

तस्मिन् काले राजसभा विद्वत्प्रवेश्या कथंविधासीदिति कल्पने यायावरीयो राजशेखरः काव्यमीमांसायामेवमादिक्षत्—

राजा कविः कविसमाजं विदधीत। राजनि कवौ सर्वो लोकः कविः स्यात्। स काव्यपरीक्षायै सभां कारयेत्। सा षोडशभिः स्तम्भैश्चतुर्भिर्द्वारैरष्टभिर्मत्तवारणीभि-

रुपेता स्यात्। तदनुलग्नं राज्ञः केलिगृहम्। मध्ये चतुःस्तम्भान्तरा हस्तमात्रोत्सेधा समणिभूमिका वेदिका। तस्यां राजासनम्। तस्य चोत्तरतः संस्कृताः कवयो निविशेरन्। बहुभाषाकवित्वे यो यत्राधिकं प्रवीणः स तेन व्यपदिश्यते। यस्त्वनेकत्र प्रवीणः स संक्रम्य तत्र तत्रोपविशेत् ततः परं वेदविद्याविदः प्रामाणिकाः पौराणिकाः स्मार्ता भिषजो मौहूर्तिका अन्येऽपि तथाविधाः। पूर्वेण प्राकृताः कवयः ततः परं नटनर्तकगायन( क? ) वादकवाग्जीवनकुशीलवतालावचरा अन्येऽपि तथाविधाः। दक्षिणतो भूतभाषाकवयः, ततः परं चित्रलेप्यकृतो माणिक्यबन्धका वैकटिकाः स्वर्णकारवर्धकिलोहकारा अन्येऽपि तथाविधाः। दक्षिणतो भूतभाषाकवयः, ततः परं भुजङ्गगणिकाः प्लवकशौभिकजम्भकमल्लाः शस्त्रोपजीविनोऽन्येऽपि तथाविधाः।

तत्र यथासुखमासीनः काव्यगोष्ठीं प्रवर्तयेत् भावयेत् परीक्षेत च। वासुदेवसातवाहनशूद्रकसाहसाङ्कादीन् सकलान् सभापतीन् दानमानाभ्यामनुकुर्यात्। तुष्टपुष्टाश्चास्य सभ्या भवेयुः। स्थाने च पारितोषिकं लभेरन्। लोकोत्तरस्य काव्यस्य च यथार्हा पूजा कवेर्वा। अन्तरान्तरा च काव्यगोष्ठीं शास्त्रवादाननुजानीयात्। मध्वपि नानवदंशं स्वदते। काव्यशास्त्रविरतौ विज्ञानिष्वभिरमेत। देशान्तरागतानां च विदुषाम(न्य?)द्वारा सङ्गं कारयेदौचित्याद् यावत्स्थितिपूजां च। वृत्तिकामांश्चोपजपेत् संगृह्णीयाच्च पुरुषरत्नानामेक एव राजोदन्वान् भाजनम्। राजचरितं च राजोपजीविनोऽप्यनुकुर्युः। राज्ञ एव ह्यसावुपकारो यद्राजोपजीविनां संस्कारः।

महानगरेषु च काव्यशास्त्रपरीक्षार्थं ब्रह्मसभाः कारयेत्। तत्र परीक्षोत्तीर्णानां ब्रह्मरथयानं पट्टबन्धश्च। श्रूयते चोज्जयिन्यां काव्यकारपरीक्षा—

> 'इह कालिदासमेण्ठावत्रामररूपसूरभारवयः।
> हरिचन्द्रचन्द्रगुप्तौ परीक्षिताविह विशालायाम्॥'

श्रूयते च पाटलिपुत्रे शास्त्रकारपरीक्षा—

> 'अत्रोपवर्षवर्षाविह पाणिनिपिङ्गलाविह व्याडिः।
> वररुचिपतञ्जली इह परीक्षिताः ख्यातिमुपजग्मुः॥'

इत्थं सभापतिर्भूत्वा यः काव्यानि परीक्षते। यशस्तस्य जगद्व्यापि स सुखी तत्र तत्र च॥'

सरस्वतीकण्ठाभरणकर्तुर्भोजदेवस्यापि विद्वत्सभावर्णनमेवैतादृशी संभाव्यते। तत्र च तत्समसामयिकानां विदुषां राजसभासभास्तारत्वमपि तथैवास्ते स्मेत्यपि निश्चितमनुमीयते।

भोजप्रबन्धकर्तुर्बल्लालपण्डितस्य मतेन तु सर्वेऽपि महाकवयो बाणमयूरादयस्त-

स्थानीमेव समासन् । परं नात्र किमपि तथ्यमिति भोजप्रबन्धस्याप्रामाणिकतेदानीं सुप्रसिद्धैव ।

वाजसनेयिसंहितायाष्टीकाकर्ता औवटपण्डितो भोजसमकालिक इति तदीयलेखतो विज्ञायते । तथैव तिलकमञ्जर्याख्याया आख्यायिकायाः कर्ता धनपालोऽपि भोजस्य, भोजपितुः सिन्धुलस्य, भोजपितामहस्य मुञ्जस्य च काले जीवित आसीत् । एवमन्येऽपि दशरूपकादिकर्तारो धनिकप्रभृतयः ।

सिन्धुलो मुञ्जस्य कनिष्ठभ्राता, तत्पुत्रश्च भोजदेव आसीदिति सिध्यत्युपरिलिखितलेखेभ्यः ।

यद्यपि—

**'मान्धाता स महीपतिः क्षितितलालंकारभूतो गतः**
**सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः ।**
**अन्ये चापि युधिष्ठिरप्रभृतयो यावन्त एवाभवन्**
**नैकेनापि समं गता वसुमती मुञ्ज त्वया यास्यति ॥'**

इति पद्यं भोजोक्त्या प्रसिद्धं वर्तते । यदा किल मुञ्जाज्ञया भोजो वधिकेन शिरश्छेदाय विजने नीतोऽथ संसूचितो मुञ्जाज्ञया तदानीं विलिख्यैनत् पद्यं संप्रेषितं भोजदेवेन मुञ्जान्तिके इति भोजप्रबन्धानुसारमाबालवृद्धं प्रसिद्धिः ।

एवं सरस्वतीकण्ठाभरण एव चाटूक्त्युदाहृतौ—

**'सौजन्याम्बुनिधे बुधप्रिय गुणप्राकार धर्मद्रुम-**
**प्रारोह प्रतिपन्नवत्सल महात्यागिन् विवेकाश्रय ।**
**लक्ष्म्यावास मनस्विनीमनसिजव्यापारदीक्षागुरो**
**श्रीमन् मुञ्ज किमित्यमुं जनमुपस्प्रष्टुं दृशा नार्हसि ॥'**

इति पूर्वश्लोकोपोद्बलकं पद्यमप्युपलभामहे । मुञ्जे राज्यं शासति सति भोजोऽवश्यमेव निरपत्यस्यास्यासूयोद्भावकोऽभूदित्यपि नाश्चर्यम् । यतोऽस्मिन् पद्ये 'किमित्यमुं जनमुपस्प्रष्टुं दृशा नार्हसि' इति वाक्यं भोजोक्तिर्भवेदेषेति प्रमाणयति । यद्वा तद्वा भवतु परं मुञ्जोत्तरं तत्कनीयान् सिन्धुलो राजाभवत् तदुत्तरं च भोजदेव इति तु निश्चितमेव ।

मुञ्जश्च तत्प्रधानमन्त्रिणा रुद्रादित्येन निषिद्धोऽपि पूर्वं षड्वारं तैलपं विजिग्ये इति सप्तमवारमपि गोदावरीं समुल्लङ्घ्याहवे प्रविष्टस्त्रिकलिङ्गदेशाधिपतिना तैलपेन

पराजितो निगडितश्च । अथ काष्ठपञ्जरे प्रवेशितः शेषमायुः शेषितवान् । तत्र च परिचर्यानियुक्तया तैलपराजभगिन्या विधवया मृणालवत्या सह तस्य प्रेमबन्धः संजातः । मुञ्जमन्त्रिभिश्च निगडस्थानं यावद् भूगर्भे गुप्तमार्गः सुरङ्गाभिधो विरचितः । तद्द्वारा मुञ्जे स्वराज्यं जिगमिषति मृणालवन्तीं तत्र पट्टमहिषीत्वेन संमानयिष्यामीति प्रतिज्ञातवति तां सह निनीषति च मृणालवती तत्र न विश्वसिति स्म । यतो मृणालवत्यास्तदानीं वयो मध्यमासीद्यदि किंचित्कालानन्तरं मत्परित्यागं कुर्यान्मुञ्जस्तदाहं किं करिष्यामीति संदिहाना सा स्वीयालंकरणपुटकमानयामीति मिषेण स्वसहोदरान्तिके सर्वमप्येतद्वृत्तमाचख्यौ । तैलपः श्रुत्वैतद्वृत्तजातं परं क्रुद्धो मुञ्जेन सह कठोरमाचरणं विदधे । सापमानं नगरे भ्रामयित्वा च शूले समारोपितवान् तमिति मेरुतुङ्गाचार्यः स्वीयप्रबन्धचिन्तामणौ मुञ्जप्रबन्धे विलिखति । रायबहादुरपण्डितश्रीगौरीशङ्करहीराचन्दओझामहोदयानां संमतौ वृत्तमेतदतिशयोक्तिमूलमुपहासमूलं च । केवलं सत्यांशोऽत्रैतावानेव यन्मुञ्जो युद्धे मृतो वा निगडितो वा न परावृत्तः स्वीयामुज्जयिनीं राजधानीमिति । सिन्धुलकालपण्डितो नवसाहसाङ्ककर्ता परिमलोऽपलापितवान् मुञ्जपराजयमिति विमर्शकोक्तिः साधीयसी । यतः—

**'स्वेनारातिकरालकालरचनाचण्डासिदण्डेन यो**
**हत्वा मुञ्जमहानृपप्रणयिनीं संग्रामरङ्गाङ्गणे ।**
**लक्ष्मीमम्बुधिमेखलावलयितक्ष्मावर्तिनीं प्रापयद्**
**भूपश्रीरणरङ्गभीमभवने साक्षात्कुलस्त्रीव्रतम् ॥'**

इति पद्यं तैलपसामन्तस्य द्वितीयभिल्लमस्य ताम्रपत्रे समुपलभ्यते । यत्र च रणरङ्गभीमस्य तैलपस्य सदने मुञ्जप्रियां लक्ष्मीं भिल्लमः कुलस्त्रीव्रतं प्रापयदिति वर्णनं मुञ्जस्य पराभवं प्रकाशयति ।

अथेदानीं वयमप्यत्र मुञ्जराजवृत्तपुरःसरं तदानींतनमैतिह्यं विलिखामः । बल्लालपण्डितः किल स्वीये भोजप्रबन्धे सिन्धुलो नाम राजा कनिष्ठे भ्रातरि मुञ्जे राज्यभारं संस्थाप्याल्पवयस्कं भोजनामानमात्मजं तदधीनं कृतवान्, अथ मुञ्जो राज्यशासनलोलुपतया भोजस्य शिरश्छेदाय प्रयतितवानिति लिखति । किंतु नागराद्धिगते ११६१ विक्रमवर्षीयलेखे—

"वंशेऽस्मिन् वैरिसिंहः क्षितिपतिरभवद् भूरिभूतिप्रभाव...... । तस्माद्वै... श्रीसीयकोऽभून्नृपः । तस्माद्वैरिवरूथिनी बहुविधप्रारब्धयुद्धाध्वरप्रध्वंसैकपिनाकपाणिरजनि श्रीमुञ्जराजो नृपः । ... । तस्यासीदथ पार्थिवः पृथुयशाः श्रीसिन्धुराजो

नृपः । ... । तत्सूनुर्भुवनैकभूषणमभूद्भूपालचूडामणिश्छायाडम्बरचुम्बिताङ्घ्रिकमलः श्रीभोजदेवो नृपः (एपिग्राफिया इण्डिका भा० २ पृ० १८३-१८५)

वैरिसिंहस्य पुत्रः श्रीसीयकः, ततस्तत्सुतो मुञ्जः, ततश्च तत्कनिष्ठो भ्राता सिन्धुलस्ततश्च तदात्मजो भोजो बभूवेति स्पष्टं विज्ञायते ।

नवसाहसाङ्ककाव्यस्य रचयिता परिमलकविरपि—

'वैरिसिंह इति प्रापज्जन्म तस्माज्जनाधिपः ।
कीर्तिभिर्यस्य कुन्देन्दुविशदाभिः सटायितम् ।

...........................................

श्रीसीयक इति क्षेत्रं यशसामुदभूत्ततः ।
दिलीपप्रतिमः पृथ्वीशुक्तिमुक्ताफलं नृपः ॥

...........................................

श्रीमद्वाक्पतिराजोऽभूदग्रजोऽस्याग्रणीः सताम् ।
सगरापत्यदत्ताब्धिपरिखायाः पतिर्भुवः ॥
अतीते विक्रमादित्ये गतेऽस्तं सातवाहने ।
कविमित्रे विशश्राम यस्मिन्देवी सरस्वती ॥

...........................................

पुरं कालक्रमात्तेन प्रस्थितेनाम्बिकापतेः ।
मौर्वीकिणाङ्कवत्यस्य पृथ्वी दोष्णि निवेशिता ॥
प्रशास्ति परितो विश्वमुज्जयिन्यां पुरि स्थितः ।
अयं ययातिमान्धातृदुष्यन्तभरतोपमः ॥

...........................................

सदा समकरस्यास्य लक्ष्मीकुलगृहस्य च ।
सिन्धुराज इति व्यक्तं नाम दुग्धोदधेरिव ॥
अनेन विहितान्यत्र यत् साहसशतान्यतः ।
नवीनसाहसाङ्कोऽयं वीरगोष्ठीषु गीयते ॥'

( नवसाहसाङ्कचरितकाव्ये एकादशे सर्गे )

धनपालश्च तिलकमञ्जर्याम्—

'श्रीवैरिसिंह इति दुर्धरसैन्यदन्तिदन्ताग्रभिन्नचतुरर्णवकूलभित्तिः ॥ ४० ॥

तत्राभूद्वसतिः श्रियामपरया श्रीहर्ष इत्याख्यया
विख्यातश्चतुरम्बुराशिरसनादाम्नः प्रशास्ता भुवः ।
भूपः खर्वितवैरिगर्वगरिमा श्रीसीयकः सायकाः
पञ्चेषोरिव यस्य पौरुषगुणाः केषां न लग्ना हृदि ॥ ४१ ॥
तस्योदग्रयशाः समस्तसुभटग्रामाग्रगामी सुतः
सिंहो दुर्धरशक्रसिन्धुरततेः श्रीसिन्धुराजोऽभवत् ।
एकाधिज्यचतुर्जिताब्धिवलयावच्छिन्नभूर्यस्य स
श्रीमद्वाक्पतिराजदेवनृपतिर्वीराग्रणीरग्रजः ॥ ४२ ॥
आकीर्णाङ्घ्रितलः सरोजकलशच्छत्रादिभिर्लाञ्छनै-
स्तस्याजायत मांसलायतभुजः श्रीभोज इत्यात्मजः ।
प्रीत्या योग्य इति प्रतापवसतिः ख्यातेन मुञ्जाख्यया
यः स्वे वाक्पतिराजभूमिपतिना राज्येऽभिषिक्तः स्वयम् ४३'

मुञ्जः संस्कृतभाषारसिकः स्वयं च प्रगल्भ आसीदितीतस्ततो वर्तमानैर्वृत्तैर्विदितचरम् । तदुत्तराधिकारी सिन्धुलोऽपि कुमारनारायणापरनामधेयो नवसाहसाङ्कत्वेन परिमलकविग्रन्थे नायकत्वेन वर्णितः ।

भोजोऽपि स्वपूर्वपूरुषानुयायी संस्कृतभाषारसिकत्वेन जगत्प्रसिद्धः । अवन्तीपूज्जयिन्यां विक्रमादित्य इव भोजोऽप्यापामरं प्रसिद्धोऽनेकविधासु च कथासु गीतोऽद्वितीयो जातः ।

उदयपुरप्रशस्तौ—

'साधितं विहितं दत्तं ज्ञातं तद् यन्न केनचित् ।
किमन्यत्कविराजस्य श्रीभोजस्य प्रशस्यते ॥'

इति भोजप्रशंसापरं पद्यम् ।

एष एव भोजदेवः काश्मीरककविविरचिते पृथ्वीराजविजयमहाकाव्ये—

'अगम्यो यो नरेन्द्राणां सुधादीधितिसुन्दरः ।
जघ्ने यशश्चयो यश्च भोजेनावन्तिभूभुजा ॥'

वीर्यरामनाम्ना प्रसिद्धस्य शाकंभरि(सांभर)राज्ञो यशोहारको मारकश्च वर्णितः ।

उदयपुरप्रशस्ताविव—

'चेदीश्वरेन्द्ररथतोग्गलभीममुख्यान्
कर्णाटलाटपतिगुर्जरराट्तुरुष्कान् ।
यद्भृत्यमात्रविजितानवलोक्य मौला
दोष्णां बलानि कलयन्ति न योद्धृलोकान् ॥

केदाररामेश्वरसोमनाथसुण्डीरकालानलरुद्रसत्कैः ।
सुराश्रयैर्व्याप्य च यः समन्ताद्यथार्थसंज्ञां जगतीं चकार ॥'

एवमाहिमालयमामलयं च भोजदेवस्य प्रभुत्वं वर्णितम् ।

परमियान् प्रदेशस्तु नासीद्भोजशासने केवलं मालवदेशस्तत्प्रान्तीयो भूयान् भूभागश्च तदधीन आसीदिति कविकृतैवेयं रचनेत्यनुमीयते । भोजे शासति पृथ्वीं चेदीश्वरो गाङ्गेयदेवः कलचूरिवंशीयः कर्णदेवश्च तत्प्रतिद्वन्द्विनावास्ताम् । कर्णदेवश्च भोजजीवनकालं यावत् धाराविजिगीषया युद्धं कुर्वाण आसीत् । अत एव भोजस्यापि कर्णगाङ्गेययोरुपरि पराक्रमः संभाव्यते । इन्द्ररथतोग्गलयोर्विषये न किमपि विदितमद्यापि । भीमो गुर्जरदेशाधिपतिश्चौलुक्यवंशीय आसीत् । तमेव भोजदेवो विजितवानिति वर्णना प्रबन्धचिन्तामणिप्रभृतिग्रन्थेषूपलब्धा । यदा भीमदेवः सिन्धुदेशमाक्रान्तवान् तदानीमेव भोजमन्त्रिणा जैनधर्मावलम्बिना कुलचन्द्रेण भीमदेवराज्यं विजितमथ जयपत्रलेखपूर्वं मालवे परावृत्तम् । एवमेकवारं दुष्कालावसरे भोजदेवेन भीमदेवोपर्याक्रमः कृतस्तदा भीमेन सान्धिविग्रहिकं डामरं संप्रेष्य दण्डं प्रदाय संधिः कृता । परस्परं कलहं कुर्वाणयोर्भोजभीमयोर्नासीत् कदापि शान्तिः । भोजस्यान्तिमसमये चेदीश्वरेण कर्णेन धारोपर्याक्रमणं कृतं तदैव भीमदेवोऽपि तेन कर्णेन सह संपृक्तः । परं विशेषो लाभस्तत्र कर्णस्यैव संजातः । जैनकविना हेमचन्द्रेण स्वीये द्व्याश्रयकाव्ये न किमप्यस्मिन्विषये संलिखितम् । यतो हेमचन्द्राचार्यो गुर्जरदेशीयभूभुजो राजसभायां प्रविष्ट आसीत् । भोजः कर्णाटदेशीयान् दक्षिणचालुक्यान् पराक्रान्तवानिति राजवल्लभविरचिताद् भोजचरित्रादपि ज्ञायते । यदा युवावस्थो भोजदेवो राज्यप्रबन्धे संलग्नमना आसीत्तदानीमेकदैकस्तत्समक्षे मुञ्जशिरश्छेदविषयकोऽभिनयोऽभिनीतः । तं दृष्ट्वैव दक्षिणदेशं विजेष्यामीत्युत्कण्ठा तन्मनसि प्रादुर्भूता । आक्रान्तश्च तेन दक्षिणदेशः । तस्मिन् तत्सहायका अप्यासन् पार्श्ववर्तिदेशानामधिपा अन्येऽपि राजानः । भोजशब्दानुसारं

तैलप एव ( परं तैलपपौत्रो विक्रमादित्यो भवेत् ? ) विजितः शिरश्छेदपूर्वं मुञ्ज-प्रतीकारो गृहीतश्च । परं मुञ्जमरणकाले भोजदेवो बालक आसीत् तैलपश्च कियताचित् कालेन मृत इति तैलपपौत्रो विक्रमादित्यो विजितः स्यात् । यः किल कल्याणनगरस्याधिपतिरासीत् । अथ विक्रमादित्योत्तराधिकारिणस्तद्भ्रातुर्जयसिंहदेवस्य शकसंवत् ९४१ काले लिखिते लेखे जयसिंहो मालवसैन्यस्य विजेता भोजरूपकमलस्य कृते चन्द्रत्वेन च वर्णितः ।

एवमुदयपुरशस्तौ कर्णाटकविजेतृत्वेन भोजो वर्णितः । परस्परं युध्यतोरनयोः स्वस्वविजयवर्णनमुचितमेव । परं विजयोऽत्र भोजस्यैव विशेषतोऽनुमीयते । यतो जयसिंहपुत्रेण सोमेश्वरेणापि भोजविजिगीषया धारोपर्याक्रान्तमासीत् ।

काश्मीरको बिह्लणपण्डितश्च विक्रमाङ्कदेवचरिते सोमेश्वरप्रतापवर्णनमेव चकार—

'दीप्रप्रतापानलसंनिधानाद्बिभ्रत्पिपासामिव यत्कृपाणः ।
प्रमारपृथ्वीपतिकीर्तिधारां धारामुदारां कवलीचकार ॥
अगाधपानीयनिमग्नभूरिभूभृत्कुटुम्बोऽपि यदीयखड्गः ।
भाग्यक्षयान्मालवभर्तुरासीदेकां न धारां परिहर्तुमीशः ॥
निःशेषनिर्वासितराजहंसः खड्गेन बालाम्बुदमेचकेन ।
भोजक्ष्माभृद्भुजपञ्जरेऽपि यः कीर्तिहंसीं विरसीचकार ॥
भोजक्ष्मापालविमुक्तधारानिपातमात्रेण रणेषु यस्य ।
कल्पान्तकालानलचण्डमूर्तिश्चित्रं प्रकोपाग्निरवाप शान्तिम् ॥
यः कोटिहोमानलधूमजालैर्मलीमसीकृत्य दिशां मुखानि ।
तत्कीर्तिभिः क्षालयति स्म शश्वदखण्डतारापतिपाण्डुराभिः ॥
ध्रुवं रणे यस्य जयामृतेन क्षीवः क्षमाभर्तुरभूत्कृपाणः ।
एका गृहीता यदनेन धारा धारासहस्रं यशसोऽवकीर्णम् ॥'

अतो जयसिंहस्य भोजकमलकृते चन्द्रत्ववर्णनं कविकल्पनमात्रं सिध्यति । एवं बिह्लणपण्डितः—

'भोजः क्ष्माभृत्स खलु न खलैस्तस्य साम्यं नरेन्द्रै-
स्तत्प्रत्यक्षं किमिति भवता नागतं हा हतास्मि ।
यस्य द्वारोड्डमरशिखरक्रोडपारावतानां
नादव्याजादिति सकरुणा व्याजहारेव धारा ॥'

( विक्रमाङ्कदेवचरिते सर्गः १८ श्लो० ९६ )

भोजप्रशंसनपरं भोजवियोगं वर्णयति ।

यच्चोदयपुरप्रशस्तौ तुरुष्कविजेतृत्वेन भोजवर्णनमुपलभ्यते ततो महमूदगज्ञनवीति समाख्यातस्य तुरुष्कस्याक्रमणकालः हिजरी सन् ४१३= विक्रमसंवत् १०७८ ख्रिस्तसंवत् १०२१ संभाव्यते । यतस्तेन दुष्टेन यदा गोपाद्रिदुर्गं प्रति (ग्वालियर) समाक्रान्तं तदानीं मालवदेशस्याधिपतिर्भोजदेव एवासीत् । गोपाद्रिदुर्गस्याधिपतिश्च कच्छपघातवंशीय आसीत् । यस्मिन् वंशेऽधुना जयपुरराज्यमास्ते । तुरुष्केण सह भोजस्य युद्धमभूदिति प्रायो निश्चितमेव ।

एवमेव भोजस्य देशविदेशेषु देवमन्दिरादिनिर्माणवर्णनमपि न निर्मूलम् । यतः कह्लणपण्डितः—

'मालवाधिपतिर्भोजः प्रहितैः स्वर्णसंचयैः ।
अकारयद्येन कुण्डयोजनं कपटेश्वरे ॥
प्रतिज्ञा भोजराजेन पापसूदनतीर्थजैः ।
सततं वदनस्नाने या तोयैर्विहिताभवत् ॥
अपूरयत्तस्य यस्तां दुस्तरां नियमादितः ।
प्रहितैः काचकलशीकुलैस्तद्वारिपूरितैः ॥
स तस्य पद्मराजाख्यः पर्णप्रातिकदैशिकः ।
प्रियताम्बूलशीलस्य त्यागिनो वल्लभोऽभवत् ॥'

(चक्कलकम्)

(राजतरङ्गिण्यां सप्तमतरङ्गे श्लो० १९०–१९३)

प्रकारेणानेन भोजस्य कपटेश्वरे कुण्डनिर्मितिम्, प्रत्यहं पापसूदनतीर्थजैस्तोयैर्मुखप्रक्षालनम्, पद्मराजाख्यस्य ताम्बूलविक्रेतुस्तत्प्रतिज्ञानिर्वहणं च सुष्ठु वर्णितं काश्मीरकविदुषा । सोऽयं पर्णविक्रेता पद्मराजः काश्मीरकभूपतेरनन्तदेवस्यातीव वल्लभ आसीत् । कपटेश्वरकुण्डेऽद्यापि पाषाणमयी भित्तिर्भोजदेवस्य कीर्तिरूपेण तिष्ठति । कुण्डस्यास्य व्यासः १२० हस्तपरिमितः खातश्चापि तथाविधः । अस्यैव कुण्डस्य समीपे शिवमन्दिरमपि भोजदेवनिर्मितमिति किंवदन्ती । यथा पूर्वकाले राजानो भूयसा श्रमेण व्ययेन च गङ्गादितीर्थोदकमानीय प्रतिज्ञापूर्वं पीतवन्तस्तथैव स्वर्गवासिनो जयपुरनरेन्द्रस्य माधवसिंहवर्मणोऽपि प्रतिज्ञानं प्रतिवर्षं श्रीगङ्गाजलसंग्रहश्चास्माभिः प्रत्यक्षं दृष्टम् । भवेदेवमेव भोजस्यापि प्रतिज्ञानं पापसूदनतीर्थतोयतो मुखप्रक्षालनविषयकमिति नाश्चर्यास्पदम् ।

श्रीमता भोजदेवेन धारायां सरस्वतीकण्ठाभरणनाम्नी पाठशाला स्थापितासीत्। तत्र च बहवो ग्रन्थाः श्यामपाषाणशिलासूत्कीर्णा भोजकालिका भोजोत्तरकालिको दयादित्यनरवर्मार्जुनवर्मकालिकाश्चोपलब्धाः । अतीव खेदास्पदं यत्तुरुष्कैः पाठ-शालास्थानं परमेश्वरस्मृतिस्थानत्वेन ( मसजिद्नाम्ना ) कल्पितमथ ताः शिलाः सोपानत्वेनाधोमुखीकृत्य स्थापिताः । पुरातत्त्वविद्भिरन्विष्यान्विष्य शिलासु तासु भोजकृतं कूर्मशतकं प्राकृतभाषानिबद्धमथोऽवनिशतकमपि तद्भाषोपनिबद्धम्, पारिजतमञ्जरी नाटिका, भर्तृहरिकारिका एवमादयोऽन्येऽपि ग्रन्था: समुद्भाविताः । पाठशालायाः सरस्वतीकण्ठाभरणनाम्न्याः सविध एव कूपमेकं सरस्वतीकूपत्वेन पुरा प्रसिद्धमासीद् यस्याधुनापि 'अकलकुई' इति नाम्ना प्रसिद्धिः ।

भोजदेवेन बहुषु विषयेषु बहवो ग्रन्था उपनिबद्धाः ।

तेषां नामानि यथा—

आदित्यप्रतापसिद्धान्तः ( ज्योतिषे )
आयुर्वेदसर्वस्वम् ( वैद्यके )
चम्पूरामायणम् ( चम्पूः )
चाणक्यनीतिः ( ? )
चारुचर्या ( धर्मशास्त्रे )
तत्त्वप्रकाशः ( शैवविषये )
नाममालिका ( कोषे )
युक्तिकल्पतरुः
राजमार्तण्डः ( पतञ्जलिकृतयोगसूत्राणां टीका )
राजमार्तण्डः ( वेदान्ते )
,, ( ज्योतिषे )
राजमृगाङ्कः ( ज्योतिषे करणग्रन्थः । )
विद्याविनोदकाव्यम्
विद्वज्जनवल्लभाख्यो ज्योतिषविषयकः प्रश्नग्रन्थः
विश्रान्तविद्याविनोदाख्यो वैद्यकग्रन्थः
व्यवहारसमुच्चयाख्यो धर्मशास्त्रग्रन्थः
शब्दानुशासनम्
शालिहोत्राख्योऽश्ववैद्यकग्रन्थः ।

शिवतत्त्वरत्नकलिका

समराङ्गणसूत्रधाराख्यः शिल्पविषयकग्रन्थः ।

सरस्वतीकण्ठाभरणाख्योऽलंकारग्रन्थः ।

सिद्धान्तसंग्रहाख्यो ग्रन्थः शैवविषयकः ।

सुभाषितप्रबन्धाख्यः सुभाषितग्रन्थः ।

एवमादयो बहवो ग्रन्थाः श्रीमता भोजदेवेन रचिताः समुपलभ्यन्ते । डॉ०टी० आफ्रेक्टपण्डितविरचितपुस्तकसूचीग्रन्थे (Catalogus Cotalogarum) एत एव निबद्धाः । हनुमन्नाटकविषयेऽपि किंवदन्ती प्रसिद्धा यदेतन्नाटकं शिलोत्कीर्णं समुद्रप्रक्षिप्तमासीद् ततो भोजदेवेनैवोद्धृतमासीदिति ।

श्रीमतो भोजदेवस्य स्वहस्ताक्षराङ्कितं ताम्रपत्रत्रयमद्यावध्यधिगतम् । तेषु ताम्रपत्रद्वयं काव्यमालायामेव प्राचीनलेखमालानामके शिलालेखसंग्रहे समुद्धृतमेव । यत्तृतीयमधिगतं तदप्यत्र समुद्धरामः ।

**श्रीमतो भोजदेवस्य ताम्रपत्रम् ।**

**'ॐ जयति व्योमकेशोऽसौ यः सर्गाय बिभर्ति ताम् ।**
**ऐन्दवीं शिरसा लेखां जगद्बिजाङ्कुराकृतिम् ॥ १ ॥**
**तन्वन्तु वः स्मरारातेः कल्याणमनिशं जटाः ।**
**कल्पान्तसमयोद्दामतडिद्वलयपिङ्गलाः ॥ २ ॥**

परमभट्टारकमहाराजाधिराजपरमेश्वरश्री [सी] यकदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीवाक्पतिराजदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीसिन्धुराजदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीभोजदेवः कुशली । स्थलीमण्डले घाघ्रदोरभोगान्तःपातिवटपद्रके समुपगतान् समस्तराजपुरुषान् ब्राह्मणोत्तरान् प्रतिनिवासिजनपदादींश्च समादिशत्यस्तु वः संविदितं यथास्माभिः कोङ्कणविजयपर्वणि स्नात्वा चराचरगुरुं भगवन्तं भवानीपतिं समभ्यर्च्य संसारस्यासारतां दृष्ट्वा—

**'वाताभ्रविभ्रममिदं वसुधाधिपत्य-**
**मापातमात्रमधुरो विषयोपभोगः ।**
**प्राणास्तृणाग्रजलबिन्दुसमा नराणां**
**धर्मः सखा परमहो परलोकयाने ॥**

भ्रमत्संसारचक्राग्रधाराधारमिमां श्रियम् ।
प्राप्य ये न ददुस्तेषां पश्चात्तापपरं फलम् ॥'

इति जगतो विनश्वरं स्वरूपमाकलय्योपरि स्वहस्तोऽयं श्रीभोजदेवस्य ।



लिखितग्रामात् भूनिवर्तनशतैकनि १०० स्वसीमातृणगोचरयूतिपर्यन्तं हिरण्यादायसमेतं सभागभोगं सपरिकरं सर्वादायसमेतं ब्राह्मणभाईलाय वामनसुताय वशिष्ठसगोत्राय वाजिमाध्यंदिनशाखायैकप्रवणाय च्छिच्छास्थानविनिर्गतपूर्वजाय मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धये अदृष्टफलमङ्गीकृत्य चन्द्रार्कार्णवक्षितिसमकालं यावत्परया भक्त्या शासनेनोदकपूर्वं प्रतिपादनमिति मत्वा तन्निवासिजनपदैर्यथादीयमानभागभोगकरहिरण्यादिकमाज्ञाश्रवणविधयेभूत्वा सर्वमस्मै समुपनेतव्यमिति । सामान्यं चैतत्पुण्यफलं बुद्ध्वास्मद्वंशजैरन्यैरपि भाविभोक्तृभिरस्मत्प्रदत्तधर्मादायोऽयमनुमन्तव्यः पालनीयश्च ।

उक्तं च—

'बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥

यानीह दत्तानि पुरा नरेन्द्रै-
दानानि धर्मार्थयशस्कराणि ।
निर्माल्यवान्तिप्रतिमानि तानि
को नाम साधुः पुनराददीत ॥

अस्मत्कुलक्रममुदारमुदाहरद्भि-
रन्यैश्च दानमिदमभ्यनुमोदनीयम् ।
लक्ष्म्यास्तडित्सलिलबुद्बुदचञ्चलाया
दानं फलं परयशःपरिपालनं च ॥

सर्वानेतान्भाविनः पार्थिवेन्द्रान्
भूयो भूयो याचते रामभद्रः ।

सामान्योऽयं धर्मसेतुर्नृपाणां
काले काले पालनीयो भवद्भिः ॥
इति कमलदलाम्बुबिन्दुलोलां
श्रियमनुचिन्त्य मनुष्यजीवितं च ।
सकलमिदमुदाहृतं च बुद्ध्वा
न हि पुरुषैः परकीर्तयो विलोप्याः ॥'

सं० १०७६ माघशुदि ५ इति

स्वयमाज्ञा मङ्गलं महाश्रीः

स्वहस्तोऽयं श्रीभोजदेवस्य ।

सोऽयं तृतीयो लेखः श्रीभोजदेवस्य एपिग्राफियाइण्डिकायां प्रकाशितस्तत एवास्माभिरत्र समुद्धृतः । श्रीभोजदेवे शासति गुर्जरदेशीयानन्दपुरग्रामवासिना वज्रटसुतेनोव्वटेनोज्जयिन्यां निवसता शुक्लयजुर्वेदभाष्यमरचीति भाषान्ते स्पष्टमेवोल्लिखितं प्राप्यते । एवं प्रसिद्धस्य ज्योतिर्विदो भास्कराचार्यस्य पूर्वजाय भास्करभट्टाय भोजदेवेन विद्यापतिरित्युपाधिः प्रदत्तासीत् । एवं शकसंवत्सरे ९६४ विक्रमसंवत्सरे १०९९ भोजदेवेन राजमृगाङ्काख्यः करणग्रन्थो व्यरचीति तदारम्भीयाहर्गणसाधनपद्यतोऽवसीयते । एवं आलबिरूनीनामा यात्रिकः इण्डियानाम्नि स्वपुस्तके ( विक्रमसंवत् १०३० खिस्तसंवत् १०८७ लिखिते ) धारायाः शासको भोज इति लिखति ।

भोजदेवो यदा कीर्तिमात्रावशेषो जातस्ततः कियन्तं चित् कालं पूर्वमेव चेदिदेशाधिपतिना कर्णराजेनार्धराज्यदानप्रलोभनेन गुर्जरदेशाधिपतिर्भीमः साहाय्यायाहूत आसीत् । उभाभ्यां च ताभ्यां भोजराजधानी समाक्रान्ता । अस्मिन्नेव काले श्रीमान् भोजदेवो ज्वरेण ग्रस्तः कथामात्रशेषः संजात इति कर्णेन सर्वमपि तदीयं राज्यं लुण्ठितमिति च प्रबन्धचिंतामणितो ज्ञायते ।

राजमृगाङ्कानुसारं १०९९ विक्रमसंवत्सरं यावत् भोजसत्ता निश्चीयते । तदनन्तरमपि तस्य जीवितमासीदिति जयसिंहताम्रपत्रानुसारमनुमातुं शक्यम् । यतो जयसिंहस्तदुत्तराधिकारी जातः । तदीयं दानपत्रं च १११२ संवत्सरोट्टङ्कितमधिगम्यते । अतः सर्वथा १११० विक्रमसंवत्सरासन्ने काले भोजदेवस्य परलोकयात्रा प्रायो निश्चिता ।

एवं—

'पञ्चाशत्पञ्च वर्षाणि सप्तमासं दिनत्रयम् ।
भोजराजेन भोक्तव्यः सगौडो दक्षिणापथः ॥'

इति बल्लालपण्डितोक्तिरपि भविष्यदर्थबोधिका प्रायः पूर्वलिखितसंवत्सरासन्न एव समाप्यते । यतो मुञ्जमरणोत्तरं भोजशासनकालस्यावधिरपीयत्येव ।

राजतरङ्गिणीकर्त्रा कह्लणेन कलशराजसमकालिको भोजदेव आसीदिति लिखितम् । कलशश्च विक्रमसंवत्सरं ११२० आरभ्य विक्रमसंवत्सरं ११४६ पर्यन्तं विद्यमान आसीत् । एतदाधारेणैव डाक्तरबूलरपण्डितः, श्रीमान् डाक्तरः स्टीन॰ पण्डितश्च कलशसमकालिकं भोजं मत्वा भोजजीवितं ११२० विक्रमवर्षपर्यन्तं मन्वाते । परं १११२ विक्रमवर्षीयो जयसिंहलेखः, जयसिंहोत्तराधिकारिण उदयादित्यस्य १११६ विक्रमवर्षीयलेखश्च प्राप्ताविति भोजदेव १११० कालासन्न एव काले भोजस्त्यक्तवान् लोकमेनमिति सिध्यति ।

राजतरङ्गिणीकर्ता बहुकालानन्तरं रचयामास ग्रन्थमिति कर्णाकर्ण्यैव लिखितमेतेन भोजसमकालिकत्वं कलशस्य ।

एवं किल भोजवृत्तमस्माभिरत्र संक्षेपतो लिखितम् । विशेषतो द्रष्टुकामैः 'Paramaras of Dhar' इति नाम्ना प्रसिद्धे पुस्तके प्राप्यं स्यात् ।

पुस्तकस्यास्य कर्तृभिरेकं पुस्तकमस्मत्सकाशेऽपि संप्रेषितमिति तेभ्यो धन्यवादान्वितरामः ।

पुस्तकस्यास्य मुद्रणे वे. शा. सं. रा. रा. श्रीवीरेश्वरशास्त्रिसंपादितमेकं मुद्रितं पुस्तकम्, आनन्दराम बहोरा B. A. B. C. S. संपादितमन्यदेकं मुद्रितमेव पुस्तकम्, एवं जयपुरराजगुरुश्रीचन्द्रदत्तमैथिलानामेकं पुस्तकं लिखितं प्रायः प्रथमशुद्धतरं च तथा साहित्यशास्त्रीकन्हैयालालप्रश्नवरप्रदत्तमेकं पुस्तकमेवं पुस्तकचतुष्कं मुद्रणार्थं साहाय्यरूपेण संगृहीतम् ।

तथा द्वितीयपरिच्छेदपर्यन्तं पुस्तकद्वितयं डेक्कनकॉलेजतः प्राप्तम् । मुद्रितपुस्तकद्वितयं क. ख. संज्ञाभ्यां लिखितं च पुस्तकद्वितयं ग. घ. संज्ञाभ्यां संज्ञातमस्माभिः ।

अत्र येषां ग्रन्थकाराणां पद्यान्युदाहृतानि तेषां कति पद्यान्युद्धृतान्यत्र कश्च कालस्तेषामित्यपि परिशिष्टरूपेण योजितमस्माभिः ।

भोजदेवस्य प्रधानः पण्डितो गोविन्दभट्ट आसीत्, अतो वयमनुमिनुमो यत् सरस्वतीकण्ठाभरणरचनेऽवश्यमेव तत्साहाय्यं भवेत्। नलोदयाख्यस्य काव्यस्य रचयिता कालिदासोऽपि भोजसभायामासीदित्येव भोजकालिदासविषयिणीनां कथानां मूलम्।

अलंकारग्रन्थेषु सरस्वतीकण्ठाभरणस्य प्रमुखग्रन्थेषु गणना। सोऽयं ग्रन्थः काव्यादर्शस्य दण्डिविरचितस्य विशेषा संस्कृतिर्नाम। अत्र बहवः श्लोकाः काव्यादर्शस्थाः कारिकारूपेणोदाहरणरूपेण च संकलिताः।

काव्यप्रकाशरचनापि तदानींतनैवेति प्रायो ग्रन्थस्यास्य रचनोत्तरमेव काव्यप्रकाशनिर्मितिः संभाव्यते।

एवं ग्रन्थोऽयमस्माभिर्भूयसा श्रमेण मुद्रितः। अत्र द्वितीयपरिच्छेदपर्यन्तं संपादने पं. भवदत्तशास्त्रिणो नियुक्ता आसन्, तैश्च कार्यबाहुल्यादनवहिततया पाठभेदसंयोजने समुदासीनतया च नोचितं कृतमित्यपराधक्षमाप्रार्थनं विधाय विरमावः। अग्रिमसंस्करणे च संशोधनं विधास्यावः.

जयपुरम्
२२-११-२४

संशोधकौ,
केदारनाथ-वासुदेवशास्त्रिणौ।



॥ श्रीः ॥

# श्रीभोजदेवविरचितस्य सरस्वतीकण्ठाभरणाख्यालंकार-ग्रन्थस्य विषयानुक्रमणिका ।

१. अत्रैव रत्नदर्पणटीकाकर्त्रा प्रकृतिपरिणामः, परपुरप्रवेशः, खण्डसंघात्यम्, चूलिका, परिमलश्चेति पञ्चसंख्या योनिजकाव्यभेदाः प्राकृतगाथाभिरुदाहृताः ।

इति शब्दालंकारनिर्णयो नाम द्वितीयः परिच्छेदः।

---

**अर्थालंकारनिर्णयो नाम तृतीयः परिच्छेदः।**

(पृ० ३११–पृ० ३९८)

---

**उभयालंकारविवेचनश्चतुर्थः परिच्छेदः ।**

**(पृ. ३९८–पृ. ५५४)**

इत्युभयालंकारविवेचनो नाम चतुर्थः परिच्छेदः ।

विषयः पृष्ठसङ्ख्या.

**रसविवेचनो नाम पञ्चमः परिच्छेदः ।**

(पृ. ५५५-७४४)

विषयः पृष्ठसङ्ख्या.

इति रसविवेचनो नाम पञ्चमः परिच्छेदः ।

ग्रन्थसमाप्तिः ॥

इति सरस्वतीकण्ठाभरणानुक्रमणी ।



# काव्यमाला ।



श्रीमन्महाराजाधिराजश्रीभोजदेवविरचितं

## सरस्वतीकण्ठाभरणम् ।

श्रीरत्नेश्वरविरचितया रत्नदर्पणाख्यया व्याख्यया समेतम् ।



प्रथमः परिच्छेदः ।

एकेन यस्य यमिनः प्रमदेव देहमर्धेन राजति पुमानिव चापरेण ।
तत्त्वक्रमादथ च न प्रमदा पुमान्वा श्रेयांसि वर्धयतु स स्मरशासनो वः ॥

श्रीरामसिंहदेवेन दोर्दण्डदलितद्विषा ।
क्रियतेऽवन्तिभूपालकण्ठाभरणदर्पणः ॥

कण्ठाभरणमनर्घ्यं वाग्देवीरत्नदर्पणोत्सङ्गे ।
अस्मिन्पश्यतु निभृतं प्रकाशसर्वाङ्गलावण्यम् ॥

ग्रन्थारम्भे समुचितेष्टदेवतानमस्कारेण शिष्टाचारमनुवर्तते—

**ध्वनिर्वर्णाः पदं वाक्यमित्यास्पदचतुष्टयम् ।**
**यस्याः सूक्ष्मादिभेदेन वाग्देवीं तामुपास्महे ॥ १ ॥**

**ध्वनिरिति** । वाचामधिष्ठात्री देवी द्योतमाना स्वप्रकाशशब्दब्रह्मरूपा भारती । कथमुपास्यते । सूक्ष्मादिभेदेन ध्वन्यादिभेदेन च विवक्षितो नमस्कारः । शब्दब्रह्मणश्चतस्रो भिदा भवन्ति । सूक्ष्मा, पश्यन्ती, मध्यमा, वैखरी चेति । तत्राविकारदशा सूक्ष्मा । सा हि सर्वस्य प्राणापानान्तरालवर्तिनी विगतप्रादुर्भावतिरोभावा सम्यक्प्रयोगपरिशीलनात्मना कर्मयोगेन मननादिना ज्ञानयोगेन च सम्यगधिगम्यते । 'सेयमाकीर्यमाणापि नित्यमागन्तुकैर्मलैः । अन्त्या कला हि सोमस्य नात्यन्तमभिभूयते ॥ तस्यां विज्ञातमात्रायामधिकारो निवर्तते । पुरुषे षोडशकले तामा-

दुरमृतां कलाम् ॥' इति । तस्य ब्रह्मणोऽनाद्यविद्यावशादाद्यः परिणामः पश्यन्तीरूपो जायते । स हि वर्णविभागादक्रमः स्वयंप्रकाशश्च । पूर्वापरे स्वावस्थे पश्यतीति पश्यन्तीत्युच्यते । ततः परमविद्योपादानादन्तःसंकल्परूपक्रमवान् श्रोत्रग्राह्यवर्णाभिव्यक्तिरहितस्तृतीयः परिणामो मध्यमारूपो जायते । सा किल द्वयोः परिणामयोर्मध्ये सदा तिष्ठतीति मध्यमेत्युच्यते । अन्तरं दूरप्रसृतायामविद्यायां स्थानकरणप्रयत्नव्यज्यमानश्रोत्रसंवादिवीणादुन्दुभिनादपरिचयगद्गदाव्यक्ताकारादिवर्णसमुदायात्मकस्तृतीयः परिणामो वैखरीरूपो जायते । विशिष्टं खमाकाशं राति प्रयच्छतीति विखरो देहेन्द्रियसंघातः । तथा च श्रुतिः—'न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति । अशरीरं वा व सन्तं प्रियाप्रिये न स्पृशतः ॥' इति । तत्र भवा वैखरीति । तदेतासामवस्थानामाद्यास्तिस्रो नित्या अतीन्द्रियाः । तदुक्तम्—'स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा । वैखरी वाक्प्रयोक्तृणां प्राणवृत्तिनिबन्धना ॥ केवलं बुद्ध्युपादानक्रमरूपानुपातिनी । प्राणवृत्तिमतिक्रम्य मध्यमा वाक्प्रवर्तते ॥ अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा । स्वरूपज्योतिरेवान्तःसूक्ष्मा सा चानपायिनी ॥' इति । श्रुतिरप्याह—'चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥' इत्यादिकमागमसमुच्चयादेवावसेयम् । का पुनस्ता वाचो यासामियमधिष्ठात्रीत्यत उक्तम्—'ध्वनिर्वर्णाः पदं वाक्यमित्यास्पदचतुष्टयम् । यस्याः' इति । आस्पदमधिष्ठानमवच्छेदः । ध्वन्यादिभिरवच्छिन्ना परा वाक् तद्व्यवहारहेतुः । साहित्यप्रसिद्धाभिधानध्वननलक्षणव्यवहारकारित्वमेकस्मिन् वर्णे न निरूप्यते इति बहुवचनम् । पदवाक्ययोरस्ति प्रत्येकमपि तथाभाव इति ताभ्यामेकवचनमुपात्तम् । तदयमत्र तात्पर्यसंक्षेपः । साहित्यस्वरूपनिरूपणाय किलैष ग्रन्थारम्भः । साहित्यं च शब्दार्थयोः संबन्धः । तत्र शब्द एव क इत्यपेक्षायामयं विभागो ध्वनिरित्यादिः । अर्थस्तु स्तम्भकुम्भादिलक्षणो लोके शास्त्रे च प्रसिद्धः । संबन्धः कश्चिदनादिः । सर्वस्वायमानस्तु संबन्धो नान्यत्रेत्यस्मिन्नायतते । स चतुर्विधः—दोषहानम्, गुणोपादानम्, अलंकारयोगः, रसाभियोगश्चेति ॥

प्रेक्षावत्प्रवृत्त्यङ्गसंबन्धप्रयोजने दर्शयति—

**निर्दोषं गुणवत्काव्यमलंकारैरलंकृतम् ।**
**रसान्वितं कविः कुर्वन्कीर्तिं प्रीतिं च विन्दति ॥ २ ॥**

**निर्दोषमिति ।** प्रीतिः संपूर्णकाव्यार्थस्वादसमुत्थ आनन्दः काव्यार्थभावनाद-

शायां कवेरपि सामाजिकत्वाङ्गीकारात् । सहृदयश्लाघया वा प्रीतिस्तद्दृष्टं प्रयोजनम् । कीर्तिरदृष्टद्वारा स्वर्गफलेत्यदृष्टम् । यदाह—'कीर्तिं स्वर्गफलमाहुः' इति । अङ्गिनः काव्यस्य प्रयोजनान्वाख्यानेनाङ्गभूतस्यास्य प्रयोजनसंबन्ध उक्तः । यद्यपि काव्यशब्दो दोषाभावादिविशिष्टावेव शब्दार्थौ ब्रूते, तथापि लक्षणया शब्दार्थमात्रे प्रयुक्तः । लक्षणाप्रयोजनं चाभिधेयानामुद्देशः । त्रिधा हि शास्त्रशरीरम्—'उद्देशः, लक्षणम्, परीक्षा चे'ति । उदाहरणव्याख्याग्रन्थः सर्वत्र परीक्षापर इत्यस्मद्गुरवः । प्रयोजनाभिसंबन्धपरादेवोद्देशो लभ्यत इति न विरोधः । अत एव दोषाद्युद्देशक्रमेण परिच्छेदाः । निर्दोषं दोषात्यन्ताभाववत्, अवयवैकदेशवर्तिना श्वित्रेणैव कामिनीशरीरस्य वर्णमात्रगतेनापि दोषेण काव्यवैरस्यनियमात् । अत एवामङ्गलप्रायाणामपि दोषाणां प्रथममुपादानम् । अयमेव हि प्राचः कवेर्व्यापारो यद्दोषहानं नाम । गुणवदिति । भूम्नि प्रशंसायां वा मतुप् । अलंकृतमित्येव वक्तव्येऽलंकारैरिति प्रसिद्धालंकारपरिग्रहार्थम् । तथालंकारैरित्येव वाच्ये प्रसिद्धानामपि वक्ष्यमाणानामेवोपादानार्थमलंकृतपदम् । रसान्वितं रसेन नित्यसंबद्धम् । 'नास्त्येव तत्काव्यं यत्र परम्परयापि विभावादिपर्यवसानं न भवति' इति काश्मीरिकाः । एतेन काव्यलक्षणमपि कटाक्षितम् । ईदृशं काव्यं तत्कुर्वन् । कविरिति कवेरपि लक्षणमिति ॥

अथोद्देशक्रमेण दोषाणां सामान्यलक्षणं विभागं चाह—

**दोषाः पदानां वाक्यानां वाक्यार्थानां च षोडश ।**
**हेयाः काव्ये कवीन्द्रैर्ये तानेवादौ प्रचक्ष्महे ॥ ३ ॥**

**दोषाः पदानामिति** । हेया इत्यनेन सामान्यलक्षणम् । ये हेयास्ते दोषा इत्यभिप्रायात् । अभिमतप्रतीतिव्यवधायकतया विघ्नभूतः शश्वत्काव्ये हेयतामासादयति स एव दोषः । अयमेवार्थः 'मुख्यार्थहतिर्दोषः–' इति पदेनान्येषामभिमतः । स च पद-वाक्य-वाक्यार्थविषयतया पूर्वं त्रिविधः । पदपूर्वकत्वाद्वाक्यस्य तत्पूर्वकत्वाद्वाक्यार्थस्य युक्तः क्रमः । वर्णमात्रदोषो नोल्लेखीत्युपेक्षितवान् । अवान्तरविभागे तु क्रियमाणे प्रत्येकं षोडशभिरुपाधिभिः संकुलमित्याह—षोडशेति । काव्यप्रकाशकारादिभिरुक्तानामधिकानामिहान्तर्भावः । अनन्तर्भावे तु दोषत्वमेव नास्तीत्यभिप्रायः, न तु देशीयरागन्यायेन स्वमतप्रकाशनम् । प्रतीतिव्यवधायकानां सर्वदा तद्रूपत्वात् । उक्तमेवाभिसंधानम्—तानेवादाविति ॥

विभागमन्तरेण विशेषलक्षणानवतारात्पददोषान्विभजते—

असाधु चाप्रयुक्तं च कष्टं चानर्थकं च यत्।
अन्यार्थकमपुष्टार्थमसमर्थं तथैव च ॥ ४ ॥
अप्रतीतमथ क्लिष्टं गूढं नेयार्थमेव च।
संदिग्धं च विरुद्धं च प्रोक्तं यच्चाप्रयोजकम् ॥ ५ ॥
देश्यं ग्राम्यमिति स्पष्टा दोषाः स्युः पदसंश्रयाः।

असाध्विति। मुख्यार्थहतौ मिथोऽनपेक्षासूचनया समासः। अत एव लाघवेऽनादरः। कथं पदप्रतीकदोषा न गण्यन्त इति शङ्कामभिप्रेत्याह—स्पष्टा इति। पदसंश्रयाः पदान्वयव्यतिरेकानुविधायिनः। एवं वाक्यादावपि गुणादावपीदमेवाश्रितत्वम् ॥

विभागप्रयोजनमाह—

अथैषां लक्षणं सम्यक्सोदाहरणमुच्यते ॥ ६ ॥

अथैषामिति। परीक्षां प्रतिजानीते—सम्यगिति। लक्षणदोषशून्यं लक्षणानुपपत्तिनिर्णेजनमेव हि परीक्षापदार्थः। कथमेतत्संपत्स्यते इत्यत आह—सोदाहरणमिति ॥

शब्दस्वरूपलक्षणः प्रथमनिरस्यो दोष इत्याशयेन प्रागुद्दिष्टस्यासाधोर्लक्षणमाह—

शब्दशास्त्रविरुद्धं यत्तदसाधु प्रचक्षते।

यथा—

'भूरिभारभराक्रान्त बाधति स्कन्ध एष ते।
तथा न बाधते स्कन्धो यथा बाधति बाधते ॥ १ ॥'

अत्र बाधतेरात्मनेपदित्वाद् 'बाधते' इति स्यात्, न पुनर् 'बाधति' इति ॥

शब्देति। शब्दाः शिष्यन्ते प्रकृतिप्रत्ययविभागपरिकल्पनया ज्ञाप्यन्ते येन तच्छब्दशास्त्रं त्रिमुनिव्याकरणं तेन विरुद्धं तदाम्नातप्रातिस्विकविशेषपरित्यक्तमतो न देशीयपदानामसाधुत्वम्। तथा च प्राच्यैः—'नाथ ते कुचयुगं पत्त्रावृतं मा कृथाः' इति अन्यकारकवैयर्थ्यमिति, 'सलीलपाणिद्वयलोलनालमानर्तिताताम्रदलं दधन्तीम्' इति च तादृशमेवोदाहृतम्। अत्र केचिदाहुः—'बाधतिधातुं संस्कारप्रच्यावनेन

**मते चास्माकमुद्भेदो विद्यते नैव भाविकात्।**
**व्यक्ताव्यक्तोभयाख्याभिस्त्रिविधः सोऽपि कथ्यते ॥८७॥**

**स्वेत्यादि** । निजाशयकथनमन्यकथनमन्यापदेशश्च भाविकम्। भावे कवेरभिप्राये भवं भाविकमित्यन्वर्थनामतापि। उद्भेदभाविकयोरभेदमाह—**मत इति**। सोऽपि उद्भेदोऽपि ॥

तत्र भाविकभेदेषु स्वाभिप्रायकथनं यथा—

'णावज्झइ दुग्गेज्झिआ दिट्ठम्मि जम्मि भिउडिआ
जत्थ ण अव्वाहारओ घिप्पइ आहासत्तए।
विच्छुहइ अहिणिंदए जत्थ ण सो वअंसिआ
तं मे कहेउ[1] माणअं जइ मे इच्छहि जीअअं[2]म् ॥२३२॥

[नाबध्यते दुर्गृहीता दृष्टे यस्मिन् भ्रूकुटिका
यत्र नाव्याहारो गृह्यते आभाषमाणे।
विक्षुभ्यतेऽभिनिन्द्यते यत्र न स वयस्यया
तं मे कथय मानं यदि मे इच्छसि जीवनम् ॥]

अत्र भ्रूभे[3]दासंभाषणप्रियतमावक्षेपान् प्रत्यनभिमतप्रतिपादनरूपस्याभिप्रायस्य कथितत्वादिदं स्वाभिप्रायकथनं नाम भाविकम् ॥

**णावज्जइ इत्यादि**। "नाबध्यते दुर्ग्राह्या दृष्टे यस्मिन् भ्रुकुटिका यत्र न च (चा)व्याहारो गृह्यते आभाषमाणे। विक्षुभ्यतेऽभिनीयमाने यत्र न स वयस्यया तं मे कथय मानं यदि मे इच्छसि जीवितम् ॥" इह यस्मिन् दृष्टे दुर्ग्रहा भ्रुकुटिर्नाबध्यते समन्तान्न बध्यते यत्राभाषमाणेऽव्याहारो न च गृह्यते। यत्राभिनीयमाने वयस्यया स न क्षुभ्यते तं मानं मम कथय यदि मम जीवनमिच्छसि। अत्रानाकाङ्क्षितरूपस्याभिप्रायस्य कथनम् ॥

---

१. 'कहइ' क. ख. ग. २. 'जीइअम्' इति घ. ३. 'भ्रूद्भेदा' ख.

अन्यभावना यथा—

'दंसणवलिअं दढकं विबन्धणं दीहरं सुपरिणाहम् ।
होइ घरे साहीणं मुसलं धण्णाणं महिलाणम् ॥ २३३ ॥'

[दंशनवलितं दृढकं विबन्धनं दीर्घं सुपरिणाहम् ।
भवति गृहे स्वाधीनं मुसलं धन्यानां महिलानाम् ॥]

अत्र मेढ्रभावनया मुसलरूपस्योक्तत्वादिदमन्यभावनाभिधानं भाविकम् ॥

**दंसणेत्यादि** । "दंशनेन वलितं दृढकं विबन्धनं दीर्घं सुपरिणाहम् । भवति गृहे स्वाधीनं मुसलं धन्यानां महिलानाम् ॥" इहोत्तमस्त्रीणां गृहे ईदृशं मुसलं स्वायत्तं भवति । कीदृशम् । दंशने धान्यादिमर्दने वलितं लग्नम् । दृढकं दृढम् । स्वार्थे कन् । विगतबन्धनं दीर्घं सुपरिणाहमतिस्थूलं च । मेढ्रपक्षे दंशने भगमर्दने वलितं संनद्धं दृढं विगतबन्धनं दीर्घमतिस्थूलं च । अत्र मेढ्राभिप्रायेण मुसलोक्तेरन्यभावना ॥

अन्यापदेशो यथा—

'आसाइअमण्णाएण जेत्तिअं[1] तेत्तिअं चिअ विहिणम् ।
ओरमसु वसह एण्हिं रक्खिज्जइ गहवइच्छेत्तम् ॥ २३४ ॥'

[आस्वादितमज्ञातेन यावत्तावदेव व्रीहीणाम् ।
उपरम वृषभेदानीं रक्ष्यते गृहपतिक्षेत्रम् ॥]

अत्र परक्षेत्रस्य घस्मरवृषनिवारणापदेशेन चिरात्परिज्ञात उपपतिर्निवार्यते[2], तदिदमन्यापदेशाख्यं भाविकम् ॥

**आसाइअ इत्यादि** । "आस्वादितमज्ञातेन यावत्तावतैव बन्धय धृतिम् । उपरमस्व वृषभात्र रक्षयित्वा गृहपतिक्षेत्रम् ॥" इह हे वृषभ, गृहपतिक्षेत्रं रक्षयित्वा त्वमुपरमस्व क्रीडय । अज्ञातेन त्वया यावदेवास्वादितं तावतैव धृतिं बन्धय । अत्र वृषभनिवारणव्याजेनोपपतिनिवारणमन्यापदेशः ॥

---

१. 'जित्तिअम्' ग. घ.　२. 'वार्यते' क. ख.

उद्भेदेषु व्यक्तो यथा—

'मंतेसि महुमहपणअं संदाणेसि तिअसेसपाअवरअणम्।
ओजसु मुद्धसुहावं संभावेसु सुरणाह जाअवलोअम् ॥ २३५ ॥'

[मनुषे मधुमथप्रणयं संदानयसि त्रिदशेशपादपरत्नम्।
अपजहि मुग्धस्वभावं संभावय सुरनाथ यादवलोकम् ॥]

अत्र मायाविनो महेन्द्रस्याभिप्रायः सत्यकेन व्यक्तमेवोद्भिन्न इति व्यक्तोऽयमुद्भेदः ॥

**मन्तेसीत्यादि**। "मनुषे मधुमथप्रणयं संदानयसि त्रिदशेश पादपरत्नम्। अपजहि मुग्धस्वभावं संभावय सुरनाथ यादवलोकम् ॥" इह हे सुरनाथ इन्द्र, यदि मधुमथस्य कृष्णस्य प्रणयं प्रीतिं मनुषे स्वीकरोषि। देवे पादपरत्नं पारिजातवृक्षं संददाने सति मुग्धं स्वभावं मौग्ध्यमपजहि त्यज। यादवलोकं संभावय प्रीणय। अत्रेन्द्राभिप्रायः सत्यकेन तत्सारथिना व्यक्तः प्रकाशितः ॥

अव्यक्तो यथा—

'निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥२३६॥'

अत्र 'वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्' इत्याक्षेपवता प्राकरणिकोदाहरणेन यद्यपि दूत्या दुश्चेष्टितं निर्भिन्नं तथापि न पूर्ववद्व्यक्तमित्यव्यक्तोऽयमुद्भेदः ॥

**निःशेषेत्यादि**। हे दूति, इतः स्थानात्त्वं वापीं पुष्करिणीं स्नातुं गतासि। तस्याधमस्यान्तिकं न गतासि। हे मिथ्यावादिनि, हे सुहृज्जनस्याज्ञातदुःखागमे। स्नानचिह्नान्याह—स्तनतटं निःशेषच्युतचन्दनमशेषक्षरितचन्दनमस्ति। तवाधरोऽपि त्यक्तलौहित्यः। तव नेत्रेऽत्यर्थमञ्जनशून्ये। तथा तवेयं तन्वी कृशा तनुः

१. 'सुद्ध' इति पाठः. २. 'जा अव' ख. ग. ३. 'पीडागमा' क. ख. ४. 'प्रकृतोदाहरणेन' क. ख.

शरीरं पुलकिता रोमाञ्चवती च । अत्र स्नानसंभोगयोस्तुल्यचिह्नस्योपदर्शनेन प्रकरणपरिप्राप्तं दूतीदुश्चेष्टितमुद्भिन्नम्, न च प्राग्वद्व्यक्तता ॥

उभयरूपो यथा—

'अम्लानोत्पलकोमले सखि दृशौ नीलाञ्जनेनाञ्चिते
कर्पूरच्छुरणाच्च गण्डफलके संवेल्लितः पाण्डिमा ।
श्वासाः सन्तु च कन्दुकभ्रमिभुवः किंतु प्रभावाहिना-
मङ्गानां कृशिमानमुत्कटममुं को नाम नोत्प्रेक्षते ॥२३७॥'

अत्र 'दृशोर्म्लानता, गण्डयोः पाण्डुरत्वम्, श्वासानां दैर्घ्यम्' इत्युत्कण्ठाचिह्ननिह्नवाय योऽयमविनयवत्या नीलाञ्जनादिप्रयोगस्तस्य तथाभ्युपगमेऽपि 'अङ्गानां कृशिमानमुत्कटममुं को नाम नोत्प्रेक्षते' इति योऽयं सखीव्याहारस्तेन तदभिप्राय उद्भिन्नोऽनुद्भिन्नश्च भवतीत्युभयरूपोऽयमुद्भेदः । तेऽमी त्रयोऽप्युद्भेदा भाविकान्न भिद्यन्ते ॥

**अम्लानेत्यादि** । किंतु हे सखि, तवाङ्गानाममुमुद्भटं कृशिमानं कृशत्वं को न नामोत्प्रेक्षते किंतून्नयत एव । यद्यपि तव दृशावम्लाने म्लानिहीने उत्पन्ने इव कोमले मनोज्ञे स्तः । कीदृशे । नीलकज्जलेनाञ्चिते । यतः कर्पूरस्य छुरणात् संबन्धात् पाण्डिमा पाण्डुरत्वं गण्डफलके संवेल्लितः संबद्धः । श्वासाश्च कन्दुकक्रीडनार्थं या भ्रमिर्भ्रमणं तत्प्रभवाः सन्तु । अङ्गानां कीदृशानाम् । प्रभावाहिनां प्रभां दीप्तिं वोढुं धर्तुं शीलं येषां तेषाम् । सहजरम्याणामित्यर्थः । अविनयवत्या असत्याः । अत्राविनयवत्या आशयः किंचिद्व्यक्तीकृतः । किंचिच्चाव्यक्तीकृत इत्युभयरूपता ॥ इति भाविकालंकारनिरूपणम् ॥

## संसृष्ट्यलंकारनिरूपणम् ।

संसृष्टिलक्षणमाह—

**संसृष्टिरिति विज्ञेया नानालंकारसंकरः[3] ।**
**सा तु व्यक्ता तथाव्यक्ता व्यक्ताव्यक्तेति च त्रिधा ॥८८॥**

१. 'न पुनस्तस्याधमस्यान्तिकम्' क. ख. २. 'तत्त्वाभ्युपगमेऽपि' क. ख. ३. 'सर्वालंकारसंकरः' क. ख.

तिलतण्डुलवद्व्यक्ता छायादर्शवदेव च ।
अव्यक्ता क्षीरजलवत्पांसुपानीयवच्च सा ॥ ८९ ॥
व्यक्ताव्यक्ता च संसृष्टिर्नरसिंहवदिष्यते ।
चित्रवर्णवदन्यस्मिन्नानालंकारसंकरे ॥ ९० ॥

**संसृष्टिरिति** । नानालंकाराणां संकरोऽपि······संसृष्टिः । **छायेति** । प्रतिबिम्बदर्पणवदित्यर्थः । क्षीरं दुग्धम् । पांसुर्धूलिः । **चित्रेति** । चित्रलिखितवर्णिकावदित्यर्थः ॥

व्यक्ता तिलतण्डुलवद्यथा—

'पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥ २३८ ॥'

अत्रोत्प्रेक्षाद्वयम्, रूपकद्वयं च तिलतण्डुलवत्संकीर्यते ॥

**पिनष्टीत्यादि** । समुद्रस्तरङ्गाग्रैः फेनचन्दनं पिनष्टीव । इन्दुः करैस्तदादाय दिगङ्गना लिम्पतीव । अत्रेवशब्दाभ्यामुत्प्रेक्षाद्वयम् । फेन एव चन्दनम्, दिश एवाङ्गना इति रूपकद्वयम् । तदिदं मिश्रितं तिलतण्डुलवत् । यथा तिलानां तण्डुलानां च मिथो निरपेक्षाणामेव संकीर्णता तथात्रापि ॥

व्यक्तैव छायादर्शवद्यथा—

'निर्मलेन्दु नभो रेजे विकचाब्जं बभौ सरः ।
परं पर्यश्रुनयनौ मम्लतुर्भ्रातरावुभौ ॥ २३९ ॥'

अत्रादर्शे छायेव हेत्वलंकारे रामलक्ष्मणमुखयोरिन्दुपद्मौपम्येन सदृशासदृशव्यतिरेको दृश्यते ॥

**निर्मलेत्यादि** । विवृतोऽयं व्यतिरेकालंकारे । अत्र पूर्वार्धेन हेत्वलंकारे दर्शिते तदाधारक एव सदृशासदृशयोर्व्यतिरेकः । स च दर्पणे प्रतिबिम्ब इवाधाराधेयभावेन व्यवस्थापितः ॥

---

१. 'पांशुपानीयवच्च सा' पाठः. २. 'अत्रादर्शेच्छायेव' ख.

अव्यक्ता क्षीरजलवद्यथा—

'क्षीरक्षालितचन्द्रेव नीलीधौताम्बरेव च ।
टङ्कोल्लिखितसूर्येव वसन्तश्रीरदृश्यत ॥ २४० ॥'

अत्रोपमोत्प्रेक्षे क्षीरनीरवन्मिश्रे संसृष्टे न व्यज्येते ॥

क्षीरेत्यादि । वसन्तश्रीर्वसन्तशोभाऽदृश्यत जनैः । कीदृशी । क्षीरेण दुग्धेन क्षालितश्चन्द्रो यस्यां सा । नीलीद्रव्येन धौतं क्षालितमम्बरमाकाशं यस्यां सा । टङ्केन पाषाणदारणेनोल्लिखित उत्खण्डितः सूर्यो यस्यां सा । 'टङ्कः पाषाणदारणः' इत्यमरः । अत्रोपमोत्प्रेक्षयोर्मिथो मिलनादव्यक्तता । उभयव्यञ्जकस्य तुल्यकक्षतया प्रवृत्तेरिदं बोद्धव्यम् ॥

अव्यक्तैव पांसूदकवद्यथा—

'कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी ।
याति विश्वसनीयत्वं कस्य ते कलभाषिणि ॥ २४१ ॥'

अत्र पांसूदकयोरिव मृत्पिण्डे[1] श्लेषविरोधयोरव्यक्तयोरेव व्याजस्तुतावङ्गभावोऽवगम्यते ॥

कृष्णेत्यादि । विवृतोऽयं भाविकालंकारे । अत्र यथा मृत्तिकापिण्डे धूलिजलयोर्मिथो मिलनादव्यक्तता तथा श्लेषविरोधयोर्व्याजस्तुतिप्रसङ्गतः संकरः ॥

व्यक्ताव्यक्ता नरसिंहवद्यथा—

'रजोभिस्तुरगोत्कीर्णैर्गजैश्च घनसंनिभैः ।
भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥ २४२ ॥'

अत्र नरसिंहजाताविव सिंहनरशरीरभागयोः परिवृत्त्यलंकारहेतूपमयोरङ्गभावो व्यक्ताव्यक्तरूपः परिस्फुरन्नुपलभ्यते ॥

रजोभिरित्यादि । स कीदृशः । हयखुरक्षुण्णै रजोभिर्मेघतुल्यैर्हस्तिभिश्च गगनं

१. 'मृत्पिण्डश्लेषविरोधयोः' घ.

भूतलमिव, भूतलं गगनतलमिव कुर्वन् । अत्र यथा नरसिंहजातौ सिंहनराङ्गभागयोर्व्यक्ताव्यक्तरूपं स्फुरणं तथा परिवृत्त्यलंकारे हेतूपमयोरङ्गभावो व्यक्ताव्यक्तरूपः ॥

व्यक्ताव्यक्तैव चित्रवर्णवद्यथा—

'[1]मयूरारावमुखरां प्रावृषं सतडिल्लताम् ।
महाटवीमिवोल्लङ्घ्य तोयानि मुमुचुर्घनाः ॥ २४३ ॥'

अत्र पटावयवस्थानां नीलादीनामिव पटावयव्याश्रिते चित्रवर्णे श्लेषरूपकोपमार्थश्लेषाणां पदपदार्थाश्रयाणां शरद्वर्णनवाक्याश्रयिणि समाध्यलंकारे व्यक्ताव्यक्तरूपोऽङ्गाङ्गिभावः प्रतीयते ॥

**मयूरेत्यादि** । मेघा जलानि त्यजन्ति स्म । महाटवीं महारण्यमिव प्रावृषं वर्षा उल्लङ्घ्य । कीदृशीम् । मयूरशब्दमुखरां, सह तडितेव लतया वर्तते ताम् । अत्रावयवाश्रितनीलादीनामवयव्याश्रिते चित्रवर्णे यथाङ्गाङ्गिभावस्तथा श्लेषादीनां समाध्यलंकारे व्यक्ताव्यक्तरूपोऽङ्गाङ्गिभावः प्रतीयत इति ॥

चतुर्विंशतिरित्येताः क्रमेणोभयसंश्रयाः ।
काव्यालंकृतयः प्रोक्ता यथावदुपमादयः ॥ ९१ ॥

इति श्रीमहाराजाधिराजश्रीभोजदेवविरचिते सरस्वतीकण्ठाभरणे उभयालंकारविवेचनो नाम चतुर्थः परिच्छेदः ॥

**चतुर्विंशतिरिति** । इत्यनेन प्रकारेण चतुर्विंशतिरेता उपमादयः काव्यालंकृतय उक्ता इत्यन्वयः । अजहल्लिङ्गतात्र ॥ **उभयेति** । शब्दार्थाश्रिता इत्यर्थः ॥

रत्नं रत्नधरोऽजनिष्ट गुणिनामाद्योऽनवद्यः सतां
सा शुद्धा दमयन्तिकापि सुषुवे नैयायिकं यं सुतम् ।
तस्य श्रीशजगद्धरस्य कवितुर्वाणीगणा(ला)लंकृते-
ष्टीकायामुभयप्रकाशनपरिच्छेदश्चतुर्थो गतः ॥

इति महामहोपाध्यायधर्माधिकरणिकश्रीजगद्धरविरचिते सरस्वतीकण्ठाभरणविवरणे चतुर्थः परिच्छेदः ॥

---

१. 'मयूरारावमुखरा' ग.

पञ्चमः परिच्छेदः ।

रसोऽभिमानोऽहंकारः शृङ्गार इति गीयते ।
योऽर्थस्तस्यान्वयात्काव्यं कमनीयत्वमश्नुते ॥ १ ॥
विशिष्टादृष्टजन्मायं जन्मिनामन्तरात्मसु ।
आत्मसम्यग्गुणोद्भूतेरेको हेतुः प्रकाशते ॥ २ ॥
शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् ।
स एव चेदशृङ्गारी नीरसं सर्वमेव तत् ॥ ३ ॥
पश्यति स्त्रीति वाक्ये हि न रसः प्रतिभासते ।
विलोकयति कान्तेति व्यक्तमेव प्रतीयते ॥ ४ ॥
कन्ये कामयमानं मां त्वं न कामयसे कथम् ।
इति ग्राम्योऽयमर्थात्मा वैरस्यायैव कल्पते ॥ ५ ॥
कामं कन्दर्पचाण्डालो मयि वामाक्षि निर्दयः ।
त्वयि निर्मत्सरो दिष्ट्येत्यग्राम्योऽर्थो रसावहः ॥ ६ ॥
नवोऽर्थः सूक्तिरग्राम्या श्रव्यो बन्धः स्फुटा श्रुतिः ।
अलौकिकार्था[1] युक्तिश्च रसमाहर्तुमीशते ॥ ७ ॥
वक्रोक्तिश्च रसोक्तिश्च स्वभावोक्तिश्च वाङ्मयम् ।
सर्वासु[2] ग्राहिणीं तासु रसोक्तिं प्रतिजानते ॥ ८ ॥
[3]भावो जन्मानुबन्धोऽ[4]थ निष्पत्तिः पुष्टिसंकरौ ।
ह्रासाभासौ शमः शेषो विशेषः प[5]रिशेषवान् ॥ ९ ॥
विप्रलम्भोऽथ संभोगस्तच्चेष्टास्तत्परीष्ट[6]यः ।
निरुक्तयः प्रकीर्णानि प्रेमाणः प्रेमपुष्टयः ॥ १० ॥

---

१. 'अलौकिकार्थयुक्तिश्च' क.ख. २. 'सर्वानुग्राहिणीम्' क. ३. अथ चतुर्विंशतिरसोक्तीराह. ४. 'अर्थनिष्पत्तिः' क.ख. ५. 'परिपोषवान्' क.ख. ६. परीक्षाः.

नायिकानायकगुणाः पाकाद्याः प्रेमभक्तयः ।
नानालंकारसंसृष्टैः प्रकाराश्च रसोक्तयः ॥ ११ ॥
चतुर्विंशतिरित्युक्ता रसान्वयविभूतयः ।
स्वरूपमासां[1] यो वेद स काव्यं कर्तुमर्हति ॥ १२ ॥
आलम्बनविभावेभ्यः स्वेभ्यः स्वेभ्यः समुन्मिषन् ।
रसो रत्यादिरूपेण भाव इत्यभिधीयते ॥ १३ ॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चाष्टौ स्थायिभावाः प्रकीर्तिताः ॥ १४ ॥
स्तम्भस्तनूरुहोद्भेदो[2] गद्गदः स्वेदवेपथू ।
वैवर्ण्यमश्रुप्रलय[3] इत्यष्टौ सात्त्विकाः स्मृताः[4] ॥ १५ ॥
स्मृतिर्वितर्क[5] उत्कण्ठा चिन्ता चपलता मतिः ।
गर्वः स्नेहो धृतिर्व्रीडावहित्थं मूढता मदः ॥ १६ ॥
हर्षामर्षावसूयेर्ष्या विषादो दैन्यमुग्रता ।
त्रासः शङ्का गदो ग्लानिरुन्मादः संभ्रमः श्रमः ॥ १७ ॥
निर्वेदो जाड्यमालस्यं निद्रा सुप्तं प्रबुद्धता ।
इति भावास्त्रयस्त्रिंशद्विज्ञेया व्यभिचारिणः ॥ १८ ॥
चिरं चित्तेऽवतिष्ठन्ते संबध्यन्तेऽनुबन्धिभिः ।
रसत्वं प्रतिपद्यन्ते प्रबुद्धाः[6] स्थायिनोऽत्र ते ॥ १९ ॥
रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते ।
निर्वृत्तयेऽस्य तद्योगात्प्रभवन्तीति सात्त्विकाः ॥ २० ॥
विशेषेणाभितः काये स्थायिनं चारयन्ति ये ।

१. रसोक्तीनाम्. २. 'तनुरुहोद्भेद' ग.घ. ३. 'अश्रुप्रलयावित्यष्टौ' क.ख. ४ 'मताः' क.ख. ५. 'वितर्कश्चोत्कण्ठा' क.ख. ६. 'प्रवृद्धाः' क.ख.

अनुभावादिहेतूंस्तान्वदन्ति व्यभिचारिणः ॥ २१ ॥
जनित्वा ये न जायन्ते तेऽथवा व्यभिचारिणः ।
स्मृत्यादयो हि प्रेमादौ भवन्ति न भवन्ति च ॥२२॥
रतौ संचारिणः सर्वान् गर्वस्नेहौ[1] धृतिं मतिम् ।
स्थास्नूनेवोद्धतप्रेयःशान्तोदात्तेषु जानते ॥ २३ ॥
संस्कारपाटवादिभ्योऽनुभावं वा निजाश्रये ।
संचारिणं वा जनयन् सात्त्विकं वा स जायते ॥ २४ ॥
उद्दीपनविभावेभ्यः स्मृतिहेतौ पटीयसि ।
अनुबन्धोऽनुभावादेरनुबन्धोऽ[2]स्य कथ्यते ॥ २५ ॥
विभावस्यानुभावस्य सात्त्विकव्यभिचारिणोः ।
संयोगे त[3]स्य निष्पत्तिमात्रं निष्पत्ति[4]रुच्यते ॥ २६ ॥
विषयाश्रयसंस्कारगुणप्रकृतिपाटवैः ।
दीपनातिशयैश्चास्य प्रकर्षः पुष्टिरुच्यते ॥ २७ ॥
तुल्यकालबलोत्पत्तिहेतौ भावान्तरोदये ।
संसर्गस्तस्य यस्तेन संकरः स निगद्यते ॥ २८ ॥
रसान्तरतिरस्कारादन्यद्रागाच्च तस्य यः ।
भवत्यपचयो वृद्धेस्तद्ध्रासं तं प्रचक्षते ॥ २९ ॥
हीनपात्रेषु तिर्यक्षु नायकप्रतियोगिषु ।
गौणेष्वेव पदार्थेषु तमाभासं विजानते[5] ॥ ३० ॥
बलवत्स्वपजातेषु प्रतिकूलेषु हेतुषु ।
सर्वात्मना समुच्छेदः प्रशमस्तस्य वर्ण्यते ॥ ३१ ॥
आश्रयात्प्रकृतेर्वापि संस्कारस्थैर्यतो[6]ऽपि वा ।

१. 'गर्वस्नेहैर्धृतिं' ख. २. 'अनुबन्धः स' ख. ३. रसस्य. ४. 'निष्पत्तिरिष्यते' ख. ५. 'प्रचक्षते' घ. ६. 'संसारस्थैर्यतोऽपि वा' घ.

योऽस्यात्यन्तमनुच्छेदः[1] स शेष इति शब्द्यते ॥ ३२ ॥
शृङ्गाराद्या रसा ये च ये च शान्तोद्धतादयः।
ये च रत्यादिभेदास्तान्विशेषानस्य मन्वते ॥ ३३ ॥
विभावश्चानुभावश्च संचारी चाश्रयश्च[2] यः।
ये च लीलादयो यूनां परिशेषः[3] स कीर्त्यते ॥ ३४ ॥
आश्रयो यस्य रत्यादिः प्रेमादेरुपजायते।
विषयो यत्र योषादौ सोऽस्य[4] जन्माधिगच्छति ॥ ३५ ॥
आलम्बनविभावः स ज्ञानकारणमुच्यते।
तेनादरादिरूपेण संस्कारस्तस्य जायते ॥ ३६ ॥
आहृतः[5] पटुरभ्यस्त आश्रयादेर्गुणेन सः।
तत्प्रबोधाय माल्यर्तुचन्दनेन्दूदयादयः ॥ ३७ ॥
उद्दीपनविभावास्ते स तैः स्मरति वाञ्छति।
द्वेष्टि प्रयततेऽवैति मन्यते वक्ति चेष्टते ॥ ३८ ॥
तेऽनुभावास्तदा ये स्युः स्वेदरोमोद्गमादयः।
हर्षामर्षादयो ये च ज्ञेयाः संचारिणोऽत्र ते ॥ ३९ ॥
स्मृतीच्छायत्नजन्मानो मनोवाक्कायसंश्रयाः।
विलासा ये वरस्त्रीणां ज्ञेया लीलादयस्तु ते ॥ ४० ॥
लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम्।
मोट्टायितं कुट्टमितं विव्वोको ललितं तथा ॥ ४१ ॥
विहृतं क्रीडितं केलिरिति स्त्रीणां स्वभावजाः।
हेलाहावादयश्चान्ये ज्ञेयाः स्त्रीपुंसयोरपि ॥ ४२ ॥

---

१. 'मविच्छेदः' क.ख. २. 'वाश्रयश्च' ख. ३. 'परिपोषः' क.ख. ४. रत्यादेः.
५. 'अन्यतः' क.ख.

उपसंख्यानमेतेषामनुभावेषु मन्वते ।
पश्चाद्भावानुभूतिभ्यां स्मरणाद्यनुभाववत् ॥ ४३ ॥
स्मृत्यादयोऽनुभावाश्च भावाः संचारिणश्च ये ।
नाट्येषु[1] क्रियमाणास्ते नटैरभिनयाः स्मृताः ॥ ४४ ॥
भावो यदा रतिर्नाम प्रकर्षमधिगच्छति ।
नाधिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते ॥ ४५ ॥
पूर्वानुरागो मानश्च प्रवासः करुणश्च सः ।
पुरुषस्त्रीप्रकाण्डेषु चतुःकाण्डः प्रकाशते ॥ ४६ ॥
प्रागसंगतयोर्यूनोरभिलाषः[2] प्रवर्तते ।
संकल्परमणीयोऽनुरागः स प्राच्य उच्यते ॥ ४७ ॥
अहेरिव गतिः प्रेम्णः स्वभावकुटिलेति सः ।
अहेतोर्मेति[3] नेत्युक्तेर्हेतोर्वा मान[4] उच्यते ॥ ४८ ॥
देशान्तरादिभिर्यूनोर्व्यवधानं चिराय यत् ।
नवेऽनुरागे प्रौढे वा प्रवासः सोऽभिधीयते ॥ ४९ ॥
लोकान्तरगते यूनि वल्लभे वल्लभा यदा ।
भृशं दुःखायते दीना[5] करुणः स तदोच्यते ॥ ५० ॥
रतिरेवेष्टसंप्राप्तौ पुष्टः संभोग उच्यते ।
सोऽपि पूर्वानुरागादेरानन्तर्याच्चतुर्विधः ॥ ५१ ॥
न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान्रागोऽनुषज्यते ॥ ५२ ॥

---

१. 'नाग्रेषु' (?) क., 'नाट्येऽनुक्रियमाणाः' ख. २. 'प्रागसंकेतयोर्यूनोः' ख.
३. 'अहेतोर्नेति मेत्युक्ते' क. ४. 'स न उच्यते' क. ५. 'दीनः' क.

स्त्रीपुंसयोर्विप्रलम्भे वैचित्त्याकल्पनादयः[1] ।
चेष्टाविशेषाः संभोगे चुम्बनालिङ्गनादयः ॥ ५३ ॥
विप्रलम्भेऽभियोगाद्यैः संभोगे साध्वसादिभिः ।
मिथःपरीक्षा याः[2] प्रेम्णो निर्दिष्टास्ताः परीष्टयः ॥५४॥
विप्रलम्भादिशब्दानां लोकसिद्धेषु वस्तुषु ।
प्रकृत्यादिविभागेन विनिवेशा निरुक्तयः ॥ ५५ ॥
संश्रुत्य विप्रलम्भार्थान्गृधिवञ्च्योः प्रलम्भने ।
इत्यादिज्ञापकाज्ज्ञेयः प्रपूर्वो वञ्चने लभिः ॥ ५६ ॥
आदानं च प्रतिश्रुत्य विसंवादनमेव च ।
कालस्य हरणं चाहुः प्रत्यादानं च वञ्चनम् ॥ ५७ ॥
पूर्वानुरागपूर्वेषु विप्रलम्भेषु तत्क्रमात् ।
विशेषद्योतकेनेह व्युपसर्गेण सूच्यते ॥ ५८ ॥
प्रतिश्रवो हि पूर्वानुरागे[3] वक्रेक्षितादिभिः ।
अभीष्टालिङ्गनादीनामर्दानं[4] ह्रीभयादिभिः ॥ ५९ ॥
माने निवारणं तेषां[5] विसंवादनमुच्यते ।
अयथावत्प्रदानं वा व्यलीकस्मरणादिभिः ॥ ६० ॥
प्रवासे कालहरणं व्यक्तमेषां प्रतीयते ।
प्रोष्यागतेष्विहैतानि कान्ताः कान्तेषु युञ्जते ॥ ६१ ॥
प्रत्यादानं पुनस्तेषां करुणे[6] को न मन्यते ।
स्वयं दत्तानि हि विधिस्तानि तत्रापकर्षति ॥ ६२ ॥

१. 'वैचिन्त्याकल्पकादयः' ग. २. 'परीक्षा या प्रेम्णो' घ. ३. 'पूर्वानुरागवक्रेक्षितादिभिः' क. ४. 'मादानं' क.ख. ५. अभीष्टालिङ्गनादीनाम्. ६. 'कारुणे' ग.

[1]प्रलम्भेत्यत्र यदि वा वञ्चनामात्रवाचिनि ।
विना [2]समासे चतुराश्चतुरोऽर्थान्नियुञ्जते[3] ॥ ६३ ॥
विविधश्च विरुद्धश्च व्याविद्धश्च क्रमेण सः ।
विनिषिद्धश्च पूर्वानुरागादिषु[4] विषज्यते ॥ ६४ ॥
पूर्वानुरागे विविधं वञ्चनं व्रीडितादिभिः ।
माने विरुद्धं तत्प्राहुः पुनरीर्ष्यायितादिभिः ॥ ६५ ॥
व्याविद्धं दीर्घकालत्वात्प्रवासे तत्[5]प्रतीयते ।
विनिषिद्धं तु करुणे[6] करुणत्वेन गीयते ॥ ६६ ॥
रागोऽनु सह पश्चाद्वानुरूपोऽनुगतोऽपि वा ।
यूनोरपूर्वः पूर्वानुरागशब्देन शब्द्यते ॥ ६७ ॥
राजते रञ्जतेर्वापि रागः [7]करणभावयोः ।
[8]घञान्यत्कारके भावे नलोपेन नियम्यते ॥ ६८ ॥
मान्यते प्रेयसा येन यं प्रियत्वेन मन्यते ।
मनुते वा मिमीते वा प्रेममानः स कथ्यते ॥ ६९ ॥
महाभाष्यकृतः कोऽसावनुमान इति स्मृतेः ।
ल्युडन्तोऽपि न पुंलिङ्गो मानशब्दः प्रदुष्यति ॥ ७० ॥
यत्राङ्गना युवानश्च वसते न वसन्ति च ।
स प्रवासः प्रशब्देन प्रतीपार्थेन कथ्यते ॥ ७१ ॥
[9]चित्तोत्कण्ठादिभिश्चेतो भृशं वासयतीह यः ।
प्रवासयति वा यूनः स प्रवासो निरुच्यते ॥ ७२ ॥

१. 'प्रलभेत्यत्र' घ. २. विशब्देन. ३. 'न्प्रयुञ्जते' ख. ४. पूर्वानुरागप्रवासकरुणाख्येषु. ५. वञ्चनम्. ६. 'करुणः' ख., 'किरणे' ग. ७. 'करुणभावयोः' ख. ८. 'घञापि करणे भावे' घ., 'घञान्यकारके भावे' क. ९. 'चिन्तोत्कण्ठादिभिश्चेतो' क.ख.

प्रपूर्वको वसिर्ज्ञेयः कारितान्तःप्रमापणे।
तूष्णीं प्रवासयेदेनमिति वृद्धानुशासनात्॥ ७३॥
अभूतोत्पादनायां कृञ् दृष्टः कुरु घटं यथा।
दृष्टश्चोच्चारणे चौरंकारमाक्रोशतीतिवत्॥ ७४॥
दृष्टोऽवस्थापनेऽश्मानमितः कुरु यथोच्यते।
अभ्यञ्जनेऽपि च यथा पादौ मे सर्पिषा कुरु॥ ७५॥
मूर्च्छाविलापौ कुरुते कुरुते साहसे मनः।
करोति चित्तं दुःखेन योऽसौ करुण उच्यते॥ ७६॥
भुजिः पालनकौटिल्याभ्यवहारानुभूतिषु।
भुनक्ति भुग्नो भुङ्क्तेऽन्नं भुङ्क्ते सुखमितीष्यते॥ ७७॥
समीचीनार्थसंपूर्वात्ततो घञ्प्रत्यये सति।
भावे वा कारके वापि रूपं संभोग इष्यते॥ ७८॥
स पालनार्थः पूर्वानुरागानन्तर उच्यते।
उत्पन्ना हि रतिस्तस्मिन्नानुकूल्येन पाल्यते॥ ७९॥
स मानानन्तरं प्राप्तः कौटिल्यार्थं विगाहते।
स्वतोऽपि कुटिलं प्रेम किं नु मानान्वये सति॥ ८०॥
प्रवासानन्तरे तस्याभ्यवहारार्थतेष्यते।
तत्र ह्युपोषितैरन्नमिव निर्विश्यते रतिः॥ ८१॥
करुणानन्तरगतोऽनुभवार्थः स कथ्यते।
विस्रम्भवद्भिरस्मिन्हि सुखमेवानुभूयते॥ ८२॥

---

१. अन्तःप्रमापणमाभ्यन्तरो वधः. २. मे पादौ सर्पिषाभ्यञ्जयेत्यर्थः. ३. 'पादौ मे कुरु सर्पिषा क.ख. ४. 'कुरुते साहसं मनः' क.ख. ५. 'करोति दुःखं चित्तेन' क.ख. ६. 'स पावनार्थः' क. ७. 'किमु मानान्वये सति' क. ८. 'ऽनुभावार्थः स कथ्यते' क.ख. ९. 'विश्रम्भवद्भिः' क.ख.ग. १०. 'मुखमेवानुभूयते' घ.

यदि वा भोग इत्यस्य संप्रयोगार्थवाचिनः ।
सर्मा[1] समासे चत्वारो[2] विशेषास्तमुपासते[3] ॥ ८३ ॥
स संक्षिप्तोऽर्थ[4] संकीर्णः संपूर्णः सम्यगृद्धिमान् ।
अनन्तरोपदिष्टेषु संभोगेषूपपद्यते ॥ ८४ ॥
नवे हि सङ्गमे प्रायो युवानः साध्वसादिभिः ।
संक्षिप्तानेव रत्यर्थमुपचारान्प्रयुञ्जते ॥ ८५ ॥
मानस्यानन्तरे तेषां व्यलीकस्मरणादिभिः ।
रोषशेषानुसंधानात्संकरः केन वार्यते ॥ ८६ ॥
संपूर्णः पूर्णकामानां कामिनां प्रोष्यसंगमे ।
उत्कण्ठितानां भूयिष्ठमुपभोगः प्रवर्तते ॥ ८७ ॥
प्रत्यागतेऽपि यत्रैषा रतिपुष्टिः प्रिये जने[5] ।
सा किमावर्ण्यते यूनां तत्रैव मृतजीविते ॥ ८८ ॥
पूर्वानुरागः[6] पूर्वाणां व्युत्पत्तिभिरुदाहृतः ।
अनन्तराणां सर्वेषां तत्समासे निरुक्तयः ॥ ८९ ॥
वृत्तिस्तत्राजहत्स्वार्था जहत्स्वार्थापि वर्तताम् ।
प्रधानमनुपस्कृत्य न तदर्थो निवर्तते ॥ ९० ॥
प्रथमानन्तरे वृत्तेरजहत्स्वार्थतेष्यते ।
नात्यन्तमजहत्स्वार्थां तां मानानन्तरे विदुः ॥ ९१ ॥
प्रवासानन्तरे त्वीषदजहत्स्वार्थतेष्यते ।
करुणार्थस्य गन्धोऽपि नास्त्येव तदनन्तरे ॥ ९२ ॥

---

१. समा समुपसर्गेण. २. 'चतुराश्चतुरोऽर्थान् प्रचक्षते' क.ख. ३. तं संभोगम्. ४. 'संक्षिप्तोऽर्थसंकीर्णः' क. ५. 'प्रयोजने' क. ६. 'पूर्वानुरागपूर्वाणां' क.ख.

अष्टमीचन्द्रक[1]: कुन्दचतुर्थी[2] सुवसन्तक[3]: ।
आन्दोलनचतुर्थ्ये[4]कशाल्मली[5] मदनोत्सव[6]: ॥ ९३ ॥
उदकक्ष्वेडिका[7]शोकोत्तंसिका[8] चूतभञ्जिका[9] ।
पुष्पावचायिका[10] चूतलतिका[11] भूतमातृका[12] ॥ ९४ ॥
कदम्बयुद्धानि[13] नवपत्रिका[14] बिसखादिका[15] ।
शक्रार्चा[16] कौमुदी[17] यक्षरात्रि[18]रभ्यूषखादिका[19] ॥ ९५ ॥
नवेक्षुभक्षिका[20] तोयक्रीडा[21] प्रेक्षादिदर्शनम्[22] ।

---

१. प्रकीर्णकेषु स्पृहयन्तीव्रतमष्टमीचन्द्रकः. स हि चैत्रचतुर्थीतोऽष्टमचतुर्थ्यामुपादीयमानः कामिनीभिरर्च्यते. २. यस्यां यवस्तरेष्वबला लोलन्ति सा कुन्दचतुर्थी. ३. वसन्तावतारदिवसः सुवसन्तकः. ४. यस्यां स्त्रियो दोलामारोहन्ति सा आन्दोलनचतुर्थी. ५. एकमेव सुकुसुमनिर्भरशाल्मलिवृक्षमाश्रित्य सुनिमीलितकादिभिः खेलतां क्रीडा एकशाल्मली. ६. त्रयोदश्यां कामदेवपूजा मदनोत्सवः. ७. गन्धोदकपूर्णवंशनाडीशृङ्गादिभिर्यूनां प्रियजनाभिषेककर्दमेन क्रीडा उदकक्ष्वेडिका. ८. यत्रोत्तमस्त्रियः पदाभिघातेनाशोकं विकाश्य तत्कुसुममवतंसयन्ति सा अशोकोत्तंसिका. ९. यत्राङ्गनाभिश्चूतमञ्जर्योऽवचित्यानङ्गाय बालरागत्वेनैव दायंदायमवतंस्यन्ते सा चूतभञ्जिका., 'भूतभञ्जिका' घ. १०. यत्र युवत्यो मदिरागण्डूषदोहदेन बकुलं विकाश्य तत्पुष्पाण्यवचिन्वन्ति सा पुष्पावचायिका. ११. यत्र कस्ते प्रियतम इति पृच्छद्भिः पलाशादिनवलताभिः प्रियो जनो हन्यते सा चूतलतिका. १२. पश्चात्मनानुनयन्ती भूतमातृका. १३. वर्षासु कदम्बनीपहारिद्रकादिकुसुमैः प्रहरणभूतैर्द्विधा बलं विभज्य कामिनीनां क्रीडा कदम्बयुद्धानि., कादम्बयुद्धानीत्यपि पाठः. १४. प्रथमवर्षणप्ररूढनवतृणाङ्कुरासु स्थलीषु शाद्वलमभ्यर्च्य भुक्तपीतानां कृत्रिमविवाहादिक्रीडा नवपत्रिका. १५. अभिनवबिसाङ्कुरोद्भेदाभिरामसरः समाश्रित्य कामिमिथुनानां क्रीडा बिसखादिका. १६. शक्रोत्सवदिवसः शक्रार्चा. १७. आश्विने पौर्णमासी कौमुदी. १८. दीपोत्सवो यक्षरात्रिः. १९. शमीधान्यानामार्द्राणामेवाग्निपक्वानामभ्यवहारोऽभ्यूषखादिका.' 'अभ्युषखादिका' इत्यपि पाठः. २०. प्रथमत एवेक्षुभक्षणं नवेक्षुभक्षिका. २१. ग्रीष्मादौ जलाशयावगाहनं तोयक्रीडा. २२. नाथादिदर्शनं प्रेक्षा.

द्यूतानि मधुपानं च प्रकीर्णानीति जानते ॥ ९६ ॥

१. आलिङ्गनादिग्लहा दुरोदरादिक्रीडा द्यूतानि. २. रागोद्दीपनाय माध्वीकादिसेवा मधुपानम्. वात्स्यायनीये कामशास्त्रे क्रीडाद्वैविध्यं समस्या देश्याश्चेति भेदात् । तासु काश्चिद्विहाय सर्वा अपि नैताभ्यः पृथक् तत्रोल्लिखिताष्टीकाकर्त्रा व्याख्याता इत्यत्रापि तद्व्याख्यानं समुद्धृत्य विलिखामः—'समस्याः क्रीडा आह—यक्षरात्रिः, कौमुदीजागरः, सुवसन्तकः । यक्षरात्रिरिति सुखरात्रिः । यक्षाणां तत्र संनिधानात् । तत्र प्रायशो लोकस्य द्यूतक्रीडा । कौमुदीजागर इति । आश्वयुज्यां हि पौर्णमास्यां कौमुद्या ज्योत्स्नायाः प्रकर्षेण प्रवृत्तेः । तत्र दोलाद्यूतप्रायाः क्रीडाः । सुवसन्तक इति । सुवसन्तो मदनोत्सवः । तत्र नृत्यगीतवाद्यप्रायाः क्रीडाः । एता माहिमान्यः क्रीडाः ॥ देश्या आह—सहकारभञ्जिका, अभ्यूषखादिका, बिसखादिका, नवपत्रिका, उदकक्ष्वेडिका, पाञ्चालानुयानम्, एकशाल्मली, कदम्बयुद्धानि, तास्ताश्च माहिमान्यो देश्याश्च क्रीडा जनेभ्यो विशिष्टमाचरेयुः । इति संभूयक्रीडाः । सहकारभञ्जिकेति । सहकारफलानां भञ्जनं यत्र क्रीडायाम् । अभ्यूषखादिका फलानां विटपस्थानामग्नौ प्लोषितानां खादनं यत्र । बिसखादिका बिसानां मृणालानां खादनं यत्र । सरःसमीपवासिनामित्येते द्वे क्वचित्क्वचिद्दृश्येते । नवपत्रिका प्रथमवर्षणेन प्ररूढनवपत्रासु वनस्थलीषु या क्रीडा सा प्रायेणाटवीसमीपवासिनामाटविकानां च । उदकक्ष्वेडिकेति । 'वंशनाडी स्मृता क्ष्वेडा सिंहनादश्च कथ्यते' इति । उदकपूर्णा क्ष्वेडा यस्यां क्रीडायां सा मध्यदेश्यानाम् । यस्याः शृङ्गक्रीडेति प्रसिद्धिः । पाञ्चालानुयानम् । भिन्नालापचेष्टितैः पाञ्चालक्रीडा यथा मिथिलायाम् । एकशाल्मली एकमेव महान्तं कुसुमनिर्भरं शाल्मलीवृक्षमाश्रित्य तत्रत्यकुसुमाभरणानां क्रीडा । यथा वैदर्भाणाम् । यवचतुर्थी वैशाखशुक्लचतुर्थ्यां नायकानां परस्परं सुगन्धयवचूर्णप्रक्षेप इति पाश्चात्येषु प्रसिद्धा । आलोलचतुर्थी श्रावणशुक्लतृतीयायां हिन्दोलक्रीडा । मदनोत्सवो मदनप्रतिकृतिपूजनम् । दमनभञ्जिका परस्परं सुगन्धपुष्पविशेषावतंसनम् । होलाका··· ··· ···. । अशोकोत्तंसिका अशोकपुष्पैः शिरोभूषणरचना । पुष्पावचायिका पुष्पक्रीडा । चूतलतिका चूतपल्लवावतंसनम् । इक्षुभञ्जिका इक्षुखण्डमण्डनम् । कदम्बयुद्धानि कदम्बकुसुमैः प्रहरणभूतैर्द्विधा बलं विभज्य युद्धानि । कदम्बग्रहणं कुसुमसुकुमारप्रहरणसूचनार्थम् । यष्टीष्टकादियुद्धानि तु न कार्याणि । यथा पौण्ड्राणां युद्धं क्वचित्क्वचिद्दृश्यते । तास्ताश्चेति । या या लोके प्रवृत्तिपूर्वाः । माहिमान्य इति महिमा महत्त्वं तद्विद्यते यासामिति । 'संज्ञायां मन्माभ्याम् ५।२।१३७'

नित्यो नैमित्तिकश्चान्यः सामान्योऽन्यो विशेषवान्।
प्रच्छन्नोऽन्यः प्रकाशोऽन्यः कृत्रिमाकृत्रिमावुभौ ॥९७॥
सहजाहार्यनामानौ परौ यौवनजोऽपरः।
विस्रम्भजश्च प्रेमाणो द्वादशैते महर्द्धयः ॥ ९८ ॥
चक्षुःप्रीतिर्मनःसङ्गः संकल्पोत्पत्तिसंततिः।
प्रलापो जागरः कार्श्यमरतिर्विषयान्तरे ॥ ९९ ॥
लज्जाविसर्जनं व्याधिरुन्मादो मूर्च्छनं मुहुः।
मरणं चेति विज्ञेयाः क्रमेण प्रेमपुष्टयः ॥ १०० ॥
नायकः प्रतिपूर्वोऽसावुपपूर्वोऽनुनायकः।
नायिका प्रतिपूर्वासावुपपूर्वानुनायिका ॥ १०१ ॥
नायिकानायकाभासावुभयाभास इत्यपि।

---

इति त्रिप्रत्ययः। सर्वदेशव्यापिन्य इत्यर्थः। देशे भवा देश्याः। प्रादेशिन्य इत्यर्थः। जनेभ्यो विशिष्टमिति घटादयो नागरकाणामिति। समस्यास्तु साधारणाः। तत्र जना नागरकाश्च क्रीडन्ति। तस्मात्तेभ्यो विशिष्टमाचरेयुः नागरत्वद्योतनार्थम्। संभूयक्रीडा इति। आसु नागरकाणां द्रव्यमुपहार्य संभूयक्रीडनात्। कन्दर्पचूडामणिकर्ता वीरभद्रोऽपि—'कुर्याच्च यक्षरात्रिं सुखरात्रिः सा च कथ्यते लोके। ऐक्यं कोजागरया कौमुद्यास्तत्र निर्दिष्टम् ॥ सुवसन्तकोऽत्र शास्त्रे भवति वसन्तस्य वासरः प्रथमः। बिसखादिका सरस्यां बिसभुक्तिः कीर्तिता लोकैः ॥ मदनार्थिताम्रकुसुमैरवतंसे चाम्रभञ्जिका प्रोक्ता। अभ्यूषखादिकैवं ज्ञातव्या ग्रन्थतः परतः ॥ अन्योन्यं जलसेकः पानीयक्ष्वेडिकेरिता विबुधैः। कृत्रिमविवाहलीला कथिता नवपत्रिका तज्ज्ञैः ॥ कृत्रिमपुत्रकलीला स्यादनुयानं तथा तु पाञ्चाल्याः। शाल्मल्यामधिरुह्य क्रीडैका शाल्मली कथिता ॥ युद्धं कदम्बमुकुलैः प्रविभज्य बलं परस्परं यत्र। स्यात्तत्कदम्बयुद्धं कुर्यादन्यास्तथा लीलाः ॥' इति जयमङ्गलाकर्तुरनुव्याचष्टे.

१. 'नैमित्तिकश्चान्यो' क.ख. २. 'विस्रम्भजश्च' क.ख. ३. 'नायकः प्रतिपूर्वोऽयमुपपूर्वोऽनुनायकः' क.ख.

तिर्यक्षु च तदाभास इति द्वादश नायकाः ॥ १०२ ॥
तेषु सर्वगुणोपेतः कथाव्यापी च नायकः ।
अन्यायवांस्तदुच्छेद्य उद्धतः प्रतिनायकः ॥ १०३ ॥
ततः कैश्चिद्गुणैर्हीनः पूज्यश्चैवोपनायकः ।
समो न्यूनोऽपि वा तस्य कनीयाननुनायकः ॥ १०४ ॥
स्यात्कथाव्यापिनी सर्वगुणयुक्ता च नायिका ।
हेतुरीर्ष्यायितादीनां सपत्नी प्रतिनायिका ॥ १०५ ॥
ततः कैश्चिद्गुणैर्हीना पूज्या चैवोपनायिका ।
समा न्यूनापि वा किंचित्कनीयस्यनुनायिका ॥ १०६ ॥
तदाभासास्तथैव स्युर्भेदाश्चैषां गुणादिभिः ।
नायकस्तत्र गुणत उत्तमो मध्यमोऽधमः ॥ १०७ ॥
प्रकृतेः सात्त्विकः स स्याद्राजसस्तामसस्तथा ।
साधारणोऽनन्यजातिः स विज्ञेयः परिग्रहात् ॥ १०८ ॥
उद्धतो ललितः शान्त उदात्तो धैर्यवृत्तितः ।
शठो धृष्टोऽनुकूलश्च दक्षिणश्च प्रवृत्तितः ॥ १०९ ॥
गुणतो नायिकापि स्यादुत्तमा मध्यमाधमा ।
मुग्धा मध्या प्रगल्भा च वयसा कौशलेन वा ॥११०॥
धीराधीरा च धैर्येण स्वान्यदीयापरिग्रहात् ।
ऊढानूढोपयमनात्क्रमाज्ज्येष्ठा कनीयसी ॥ १११ ॥
मानर्द्धेरुद्धतोदात्ता शान्ता च ललिता च सा ।
सामान्या च पुनर्भूश्च स्वैरिणी चेति वृत्तितः ॥ ११२ ॥

---

१. 'तिर्यक्षु च तदाभासा' क.ख. २. 'भेदास्तेषां' क.ख. ३. 'प्राकृतः' ख. ४. 'अनन्यजानिः' ख. ५. 'च' क.ख.

आजीवतस्तु गणिका रूपाजीवा विलासिनी ।
अवस्थातोऽपराश्चाष्टौ विज्ञेयाः खण्डितादयः ॥ ११३ ॥
निद्रा[1]कुलितताम्राक्षो नारीनखविभूषितः ।
प्रातरेति प्रियो यस्याः [2]कुतश्चित्सेह खण्डिता ॥ ११४ ॥
चाटुकारमपि प्राणनाथं कोपादपास्य या ।
पश्चात्तापमवाप्नोति कलहान्तरिता तु सा ॥ ११५ ॥
दूतीमहरहः प्रेष्य कृत्वा संकेतकं क्वचित् ।
यस्या न मिलितः प्रेयान्विप्रलब्धेति तां विदुः ॥ ११६ ॥
सा तु वासकसज्जा स्यात्सज्जिते वासवेश्मनि ।
प्रियमास्तीर्णपर्यङ्का[3] भूषिता या प्रतीक्षते ॥ ११७ ॥
स्वाधीनपतिका सा तु यस्याः पार्श्वं न मुञ्चति ।
प्रियश्चित्ररतक्रीडासुखास्वादनलोलुपः ॥ ११८ ॥
पुष्पेषुपीडिता कान्तं याति या साभिसारिका ।
प्रियो देशान्तरे यस्याः सा तु प्रोषितभर्तृका ॥ ११९ ॥
यस्याः समुचितेऽप्यह्नि प्रवासी नैति वल्लभः ।
विरहोत्कण्ठिता सा तु [4]द्वात्रिंशदिति नायिकाः ॥ १२० ॥
हीनपात्राणि शेषाणि पीठमर्दो विदूषकः ।
विटचेटौ पताकाश्च सख्यश्चैषां परिग्रहः ॥ १२१ ॥
महाकुलीनतौदार्ये महाभाग्यं कृतज्ञता ।
रूपयौवनवैदग्ध्य[5]शीलसौभाग्यसंपदः ॥ १२२ ॥

---

१. 'निद्राकूणित' क.ख. २. 'कुतश्चित्खण्डितेति सा' क., 'कुतश्चित्खण्डिता तु सा' ख. ३. 'पर्यङ्के' क. ख. ४. उत्तमादयो विलासिन्यन्ताश्चतुर्विंशतिः, खण्डितादयो विरहोत्कण्ठिताश्चाष्टाविति द्वात्रिंशत्. ५. 'शीलसौभाग्यसंमदः' क.

मानितोदारवाक्यत्वमदरिद्रा[1]नुरागिता ।
द्वादशेति गुणानाहुर्नायकेष्वाभिगामिकान् ॥ १२३ ॥
मृद्वीका[2]नालिकेराम्रपाकाद्याः पाकभक्तयः ।
नीलीकुसुम्भमञ्जिष्ठारागाद्या रागभक्तयः ॥ १२४ ॥
अन्तर्व्याजबहिर्व्याजनिर्व्याजा व्याजभक्तयः ।
धर्मार्थकामोदर्काश्च प्रेमसूद[3]र्कभक्तयः ॥ १२५ ॥
वाक्यवच्च प्रबन्धेषु रसालंकार[4]संकरान् ।
निवेशयन्त्यनौचित्यपरीहारेण सूरयः ॥ १२६ ॥
चतुर्वृत्त्यङ्ग[5]संपन्नं चतुरोदात्तनायकम् ।
चतुर्वर्गफलं को न प्रबन्धं बान्धवीयति ॥ १२७ ॥
मुखं प्रतिमुखं गर्भोऽवमर्शश्च मनीषिभिः ।
स्मृतानिर्वहणं चेति प्रबन्धे पञ्च संधयः ॥ १२८ ॥
अविस्तृतमसंक्षिप्तं श्रव्यवृत्तं सुग[6]न्धि च ।
भिन्नसर्गान्तवृत्तं च काव्यं लोकोऽभिनन्दति ॥ १२९ ॥
पुरोपवनराष्ट्रादिसमुद्राश्रमवर्णनैः ।
देशसंपत्प्रबन्धस्य रसोत्कर्षाय कल्पते ॥ १३० ॥
ऋ[7]तुरात्रिंदिवा[8]र्केन्दूदयास्तमयकीर्तनैः ।
कालः काव्येषु संपन्नो रसपुष्टिं नियच्छति ॥ १३१ ॥
राजकन्याकुमारस्त्रीसेनासेनाङ्गभङ्गिभिः ।

---

१. अदरिद्रेत्यनुरागितताया विशेषणम्. तेन स्थिरानुरागितेत्यर्थः. २. 'नारिकेराम्रपाकाद्या' ख., 'नारिकेलाम्रपाकाद्याः' घ. ३. 'प्रेमसंपर्कभक्तयः' क.ख. ४. 'रसालंकारसंकरात्' क. ५. 'चतुर्वृत्त्यङ्कसंपन्नं' क.ख. ६. 'सुसन्धि च' क. ७. 'ऋतुरात्रिं' क.ख. ८. 'दिवार्केन्दूदयास्तमयवर्णनैः' क.ख.

पात्राणां वर्णनं काव्ये रसस्रोतोऽधितिष्ठति ॥ १३२ ॥
उद्यानसलिलक्रीडामधुपानरतोत्सवाः ।
विप्रलम्भा विवाहाश्च चेष्टाः काव्ये रसावहाः ॥१३३॥
मन्त्रदूतप्रयाणाजिनायकाभ्युदयादिभिः ।
पुष्टिः पुरुषकारस्य रसं काव्येषु वर्षति ॥ १३४ ॥
नावर्णनं नगर्यादेर्दोषाय विदुषां मतम् ।
यदि शैलर्तुरात्र्यादेर्वर्णनेनैव तुष्यति ॥ १३५ ॥
गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम् ।
निराकरणमित्येष मार्गः प्रकृतिसुन्दरः ॥ १३६ ॥
वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि ।
तज्जयान्नायकोत्कर्षकथनं च धिनोति नः ॥ १३७ ॥

अथैषां लक्षणोदाहरणानि—

तत्र,

मनोनुकूलेष्वर्थेषु सुखसंवेदनं रतिः ।
असंप्रयोगविषया सैव प्रीतिर्निगद्यते ॥ १३८ ॥

तद्रूपेण रसस्य भावो यथा—

'हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥ १ ॥'

अत्र बिम्बोष्ठत्वादिभिर्मनोनुकूले पार्वतीमुखे विलोचनव्यापारानुमितो महेश्वरस्याभिलाषविशेषः सात्त्विकादेरनुत्पादात्सुखानुभवस्योत्पत्तिमात्रमनुमापयति ॥

१. 'पात्राणां वर्णनात्काव्ये' क.ख. २. 'पुष्यति' ख. ३. 'वंशवृत्तश्रुतादीनि' क. ख. ४. 'तत्र' क.ख. नास्ति. ५. 'आसंप्रयोगविषया' क.ख. ६. 'परिलुप्तधैर्यः' ख. ७. 'सात्त्विको' क.ख. ८. 'रत्युत्पादात्' क.

तद्रूपेणैव सात्त्विकोत्पत्तौ जन्म यथा—

'अभूद्वरः[1] कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी ।
[2]तस्मिन्द्वये तत्क्षणमात्मवृत्तिः समं विभक्तेव मनोभवेन ॥ २ ॥'

अत्र स्वेदरोमोद्भेदयोः[3] सात्त्विकयोरुत्पादाद्रसस्य रतिरूपेणाविर्भावोऽवगम्यते ।

जन्मैव सं[4]चार्युत्पत्तौ यथा—

'तयोर[5]पाङ्गप्रविचारितानि किंचि[6]द्व्यवस्थापितसंहृतानि ।
ह्रीयन्त्रणामानशिरे मनोज्ञामन्योन्यलोलानि विलोचनानि ॥ ३ ॥'

अत्र ह्रीः संचारिभावो जायमानो रसस्य जन्म ज्ञापयति ।

तदेवानु[7]भावोत्पत्तौ यथा—

'ततः सुनन्दावचनावसाने लज्जां मृदू[8]कृत्य नरेन्द्रकन्या ।
दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत्संवरणस्रजेव ॥ ४ ॥'

अत्र दृष्टिलक्षणः शरीरार[9]म्भोऽनुभावो भवन् रसाविर्भावं लक्षयति ।
अनुभावादेरनेकस्यैकस्य वा पुनरुत्पत्तिरनुबन्धः । सोऽनेकस्य यथा—

'विवृण्वती शैलसुतापि भावमङ्गैः [10]कंचिद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥ ५ ॥'

---

१. 'आसीद्वरः कण्टकितप्रकोष्ठः' इति मल्लिनाथोट्टङ्कितः पाठः. २. 'वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य' मुद्रितपाठः. ३. 'स्वेदरोमोद्गमयोः' ख. ४. 'जन्मैव सत्त्वाद्युत्पत्तौ यथा' ख. ५. अत्र च 'तयोरुपान्तप्रतिसारितानि', 'तयोरपाङ्गप्रतिचालितानि', 'तयोरपाङ्गप्रतिवारितानि' इत्येवंविधा अनेके पाठाः. ६. अत्रापि 'क्रियासमापत्तिनिवर्तितानि', 'क्रियासमापत्तिविवर्तितानि', 'क्रियासमापत्तिषु कातराणि', 'तयोः समापत्तिषु कातराणि किञ्चिद्व्यवस्थापितसंहृतानि' इत्येवंविधा अनेके पाठाः. ७. 'तदेवानुभवोत्पत्तौ' क., 'तदेवानुभयोत्पत्तौ' ख. ८. 'तनूकृत्य' मुद्रितपाठः. ९. 'शरीरारम्भेऽनुभावो भवन्' क.ख., 'शरीरानुभावो भवन्' ग. १०. 'स्फुरद्बालकदम्बकल्पैः' ख. मुद्रितकुमारे.

अत्र देव्याः स्मरारौ[1] पूर्वमुत्पन्ना रतिः साभिलाषतदवलोकने[2]विविक्तवसन्तादिभिरुद्दीप्यमाना रोमाञ्चावहित्थलक्षणाभ्यां सात्त्विकव्यभिचारिभ्यामनुबध्यते ॥

एकस्यैव पुनः पुनर्यथा[3]—

'यान्त्या मुहुर्वलितकंधरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥ ६ ॥'

अत्र मालत्या माधवविषये पूर्वमुत्पन्ना रतिर्वसन्तावतार[4]तत्संनिधिविशेषप्रदर्शनादिभिरुद्दीप्यमाना पुनः पुनरुत्पन्नेन वलितग्रीवकटाक्षविक्षेपलक्षणेन शरीरारम्भानुभावेनानुबध्यते । अत्रैव[5] माधवस्य मालतीविषये तदहरेवोत्पन्ना रतिस्तैरेवोद्दीपनैरुद्दीप्यमाना हर्षधृतिस्मृतिमतिव्याध्यादिभिः संचारिभावैर्वागारम्भेण चानुभावेनानुबध्यते ॥

रतिरूपेणैव रसनिष्पत्तिर्यथा—

'तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
र्निक्षेप[6] एव पदमुद्धृतमपर्यन्ती[7] ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥ ७ ॥'

अत्र जन्मान्तरानुभवसंस्कारात्प्रतिकूलेऽपि शूलिनि शैलात्मजायाः[8] सर्वकालमेवाविच्छिन्ना रतिश्चिर[9]वियुक्तस्य दुश्चरेणापि तपसा प्रार्थनीय-

१. 'शिवे' घ. २. 'तदवलोकनेन' क.ख. ३. 'पुनःपुनरुत्पत्तिर्यथा' ख. ४. 'वसन्तावतारतः संनिधिविशेष' घ. ५. 'अत्र च' घ. पुस्तके पाठान्तरम्. ६. 'निक्षेपणाय' क.ख. मुद्रिते. ७. 'मुद्धृतमुद्वहन्ती' कुमारसंभवस्य मुद्रितपाठः. ८. 'शिवायाः' घ. ९. 'चिरं वियुक्तस्य' क.ख.

संगमस्य तस्याकस्मिकदर्शनेनोद्दीप्यमाना सद्यःसमुपजायमानसात्त्विकस्वेदस्तम्भवेपथूपलक्षितैर्हर्ष[1]स्मृत्यावेगसाध्वसादिभिर्व्यभिचारिभि[2]र्भावैः पद[3]निक्षेपलक्षणेन च शरीरानुभावेन संसृज्यते। सोऽयं विभावानुभावव्यभिचारिसंयोगे[4] रतिरूपेण रसो निष्पद्यते।

रतिरूपेणैव रसपुष्टि[5]र्यथा—

'पीनश्रोणि गभीरनाभि निभृतं मध्ये भृशोच्चस्तनं
पायाद्वः परिरब्धमब्धिदुहितुः कान्तेन कान्तं वपुः।
स्वावासानुपघातनिर्वृतमनास्तत्कालमीलद्दृशे
यस्मै सोऽच्युतनाभिपद्मवसतिर्वेधाः शिवं ध्यायति ॥ ८ ॥'

अत्र सर्वदैव श्रीवत्सलक्ष्मणो लक्ष्मीविषये महाकुलीनतौदार्यस्थिरानुरागितारूपयौवनवैदग्ध्यशीलसौभाग्यमहाभाग्यादिभिः समुत्पन्ना रतिस्तदवयवविशेषकामनीयकविभावनेनोद्दीपनविभावातिशयेनोद्दीप्यमानां ब्रह्मणः समक्षमप्यालिङ्गनलक्षणेन शरीरारम्भानुभावेनानुमीयमानां लज्जाप्रणाशलक्षणां प्रेमपुष्टेरष्टमीमवस्थामध्यास्ते। अत्र चानुक्ता अपि सात्त्विका व्यभिचारिणोऽन्येऽपि चानुभावविशेषाः प्रतीयन्ते। श्रियोऽपि च समग्रात्मगुणसंपदाश्रये श्रीवत्सलक्ष्मणि तथाभूता तदभ्यधिका वा[6] रतिः प्रवृद्धप्रेमप्रियतमालिङ्गनलक्षणेनोद्दीपनविभावेनोद्दीप्यमाना नयननिमीलनानुमेयां समस्तसात्त्विकानुभावव्यभिचारिहेतुं प्रेमपुष्टेरु[7]त्तमामवस्थामाश्रयति। सोऽयं विषयसौन्दर्यादाश्रयप्रकृतेः संस्कारपाटवादुद्दीपनातिशयाच्च परां कोटिमावहन् रसः पुष्ट इत्युच्यते। अत्रैव ब्रह्मणः श्रियं प्रति मनोहरा ममेयं सृष्टिरिति, रत्नाकरस्येयमात्मजेति, चन्द्रा-

---

१. 'हर्षधृतिस्मृत्यावेग—' क.ख. २. 'व्यभिचारिभिर्भावैः' क.ख. ३. 'विक्षेपलक्षणेन' क.ख. ४. 'संयोगैः' क.ख. ५. 'रतिपुष्टिः' क. ६. 'च' ख. ७. 'रुत्तरा' ख.

मृतादीनामियं सोदर्येति, विष्णोरियं प्रियतमेति, कामस्येयं जननीत्यादिभ्य आलम्बनेभ्यः समुत्पन्ना प्रीतिः स्वावासानुपघातिना शरीरसंनिवेशेन दृङ्निमीलनजनितया च तदुपघातशङ्कयोद्दीप्यमाना तत्क्षणोपजायमानतया आवेगस्मृतिवितर्कोन्मादमोहचिन्तादिभिर्व्यभिचारिभावैस्तदनुमेयैश्च स्तम्भवेपथुप्रभृतिसात्त्विकैः शिवानुध्यानलक्षणेन बुद्ध्यारम्भानुभावेन संसृज्यमाना परं प्रकर्षमारोहन्ती[1] प्रतीयते ॥

रतौ भयादिसंकरो यथा—

'राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।
आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मयात्
क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तताम् ॥ ९ ॥'

अत्र माधवस्य मालत्यां पूर्वमुत्पन्ना रतिस्तदवस्थालोकनादिभिरुद्दीपनविभावैरुद्दीप्यमाना[2] भयशोकविस्मयक्रोधहर्षैरपि रसान्तरैः पृथक्पृथग्विभावानुभावव्यभिचारिसंयोगान्निष्पद्यमानैः संकीर्यमाणा मनोवाग्बुद्धिशरीरारम्भानुभावैर्भयाद्यनुरूपैश्च[3] सात्त्विकव्यभिचारिभिः संपर्के परं प्रकर्षमारोहन्ती प्रतीयते । तत्र चेतसो वैकल्यादिपरिभावनं मनआरम्भः, वाक्योच्चारणं वागारम्भः, राहोरिव दस्योश्चन्द्रकलामिव प्रेयसीमित्यादि बुद्ध्यारम्भः, आच्छिन्दत[4] इत्यादि शरीरारम्भः, भयादीनां च पञ्चानामपि यथाक्रमं राहोरिति, चन्द्रकलामिवाननचरीमिति, दैवात्समासाद्य मे इति, दस्योरस्य कृपाणपातविषयादिति, आच्छिन्दतः प्रेयसीमित्यालम्बनविभावास्तत्स्वरूपपरिभावनान्युद्दीपनविभावाः, विकलम्,

१. 'मारोहतीति' क.ख. २. 'तदवस्थावलोकनादिभिः' ग.घ. ३. 'शारीरानुभावैः' घ. ४. 'आच्छिद्यत' घ.

द्रुतम्, विक्षोभितम्, ज्वलितम्, विकसितं चेते इत्यनुभावाः; आतङ्ककरुणाविस्मयक्रोधमुदनुरूपाश्च कम्पाश्रुस्तम्भवैवर्ण्यरोमाञ्चादयः सात्त्विकाः, मोहविषादवितर्कौग्रताधृत्यादयो व्यभिचारिणश्चानुमीयमाना निष्पत्तिहेतवो भवन्ति । सोऽयं तुल्यकालबलोत्पत्तिकारणानां भयादिनिष्पत्तीनां रतौ संसर्गः संकर इत्युच्यते ॥

रतिरूपेण रसप्रकर्षस्य ह्रासो यथा—

'कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ १० ॥'

अत्र योषिति रोषाख्यरसान्तरतिरस्कारात्पुरुषे चान्यरागाद्रतिप्रकर्षस्य ह्रासोऽवसीयते ।

रतिरूपेण हीनपात्रेषु रसाभासो यथा—

'विक्किणइ माहमासम्मि पामरो पारडिं वइल्लेण ।
दिट्ठिं समुम्मुरे सामलीअ थणए णिअच्छन्तो ॥ ११ ॥'

[विक्रीणीते माघमासे पामरः प्रावरकं बलीवर्देन ।
दृष्टिं समुर्मुरे श्यामल्याः स्तनके नियच्छन् ॥]

१. 'चलितम्' क. २. 'विकसितं च त' घ. 'विकसितमित्यनुभावाः' क. ३. 'विषादोदकौग्रता' क. 'विषादामर्षौग्रता' ख. ४. 'भ्रूकुटिरचना' घ. ५. 'यत्रान्योन्यं' क. ६. 'चानुरागा–' ख., 'चान्यरागा' घ. ७. 'ह्रासोऽवगम्यते' क.ख. ८. 'पामरो पारणं वि इल्लेण' क. 'पामरो पारडिं वइल्लेण' ख. 'पामरो पाइडिं वइल्लेण' मुद्रितगाथास०. ९. 'णिद्धुमसुम्मुरे सामलीए थणए णिअच्छन्तो' क., 'णिद्धमसुम्मुरं-वअ सामलीए थणो पडिच्छन्तो' इति मुद्रितगाथास०, 'दिट्ठिं समुम्मुरे सामलीए थणए णिअच्छन्तो' ख.

तिर्यक्षु यथा—

'पाअडिअं सोहग्गं तंबाए उअह गोट्ठमज्झम्मि।
दुट्ठवसहस्स सिंगे अच्छिउडं कण्डुअन्तीए॥ १२॥'

[प्रकटितं सौभाग्यं गवा पश्यत गोष्ठमध्ये।
दुष्टवृषभस्य शृङ्गेऽक्षिपुटं कण्डूयमानया॥]

नायकप्रतियोगिषु यथा—

'पुलअं जणेन्ति दहकंधरस्स राहवसरा सरीरम्मि।
जणअसुआफंसमहग्घविअ करअलाअट्ठिअविमुक्का॥ १३॥'

[पुलकं जनयन्ति दशकंधरस्य राघवशराः शरीरे।
जनकसुतास्पर्शमहार्घा इव करतलाकृष्टविमुक्ताः॥]

गौणेषु यथा—

'उव्वहइ नवतणंकुररोमञ्चपसाहिआइं अंगाइं।
पाउसलच्छीअ पओहरेहिं पडिवेल्लिओ विंज्झो॥ १४॥'

[उद्वहति नवतृणाङ्कुररोमाञ्चप्रसाधितान्यङ्गानि।
प्रावृट्लक्ष्म्याः पयोधराभ्यां प्रतिप्रेरितो विन्ध्यः॥]

त एते चत्वारोऽपि रसाभासा उच्यन्ते॥

रतावेव लज्जारोषरूपरसान्तरयोः प्रशमो यथा—

'दृष्टे लोचनवन्मनाङ्मुकुलितं पार्श्वस्थिते वक्रव-
न्न्यग्भूतं बहिरासितं पुलकवत्स्पर्शे समातन्वति।

१. 'पअपाडिअं' क. 'पाअपडिअ' ख. २. 'उसह गोट्ठमज्झम्मि' क. 'वसह गोट्ठमज्झम्मि' ख. ३. 'जणेति' क. 'जणति' ख. ४. 'फअंस' क. 'फंस पहग्घ' ख. ५. 'करअलाट्ठविमुक्का' क. ६. 'नवतिणंकुर' क.ख. ७. 'पसाहिआइ' क.ख. ८. 'पाउसलच्छीए' क.ख. ९. 'विंझो' ख. १०. 'एते चत्वारोऽपि' क., 'त एतेऽपि चत्वारो' क.

नीवीबन्धवदागतं शिथिलतामाभाषमाणे ततो
मानेनापगतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ॥ १५ ॥'

अत्र बलवद्भ्यां प्रियप्रेमानुनयाभ्यां ह्रीरोषयोरुपशमः क्रियते ॥

रतावेव रोषरूपरसस्य शेषो यथा—

'एष्यत्युत्सुकमागते विचलितं[1] संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णं[2] क्षणा-
च्चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ १६ ॥'

अत्र कस्याश्चिद्बलवता प्रेम्णोन्मूलितस्यापि मानस्य शेषोऽनुवर्तते[3] । त एते भावादयो[4] दशापि रसप्रकारा हासादिष्वपि प्रायो[5] दृश्यन्ते । ग्रन्थगौरवभयात्किंचित्[6]कचिदुदाह्रियन्ते ॥

तत्र

न्यङ्गव्रीडादिभि[7]श्चेतोविकारो हास उच्यते ।

तद्रूपेण रसस्य भावो यथा—

'कनककलशस्वच्छे राधापयोधरमण्डले
नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् ।
असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपन्
जयति जनितव्रीडाहासः प्रियाहसितो हरिः ॥ १७ ॥'

अत्र राधाया[8] हरिन्यङ्गाद्, हरेस्तु व्रीडातो हासस्य सत्तामात्रं प्रतीयते ॥

---

१. 'विवलितं' क.ख. २. 'बाष्पाम्बुपूर्णेक्षणं' क. 'बाष्पाम्बुपूर्ण क्षणं' ख. ३. 'शेषेऽनुवर्तते' क. ४. 'भावा दशापि' क. ५. 'प्रायशो' ख. ६. 'न क्वचिदुदाह्रियन्ते' ख. ७. 'न्यङ्गः क्रीडादिभिः' क., 'व्यङ्गक्रीडादिभिः' ख., सोल्लुण्ठवचो न्यङ्गवाच्यम्. ८ 'राधया व्यङ्गितस्य' ख.

**शोकश्चित्तस्य वैधुर्यमभीष्टविरहादिभिः ॥ १३९ ॥**

तद्रूपेण रसस्य निष्पत्तिर्यथा—

'हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे ।
वत्स राम गतोऽसीति संतापादनुमीयसे ॥ १८ ॥'

अत्र दशरथस्य रामवियोगादुत्पन्नस्तद्गुणस्मरणादिभिरुद्दीपितश्चिन्तासंतापादिर्वागारम्भेण चानुषज्यमानः शोकरूपेण रसो निष्पद्यते ॥

**प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते ।**

तद्रूपेण रसस्य निष्पत्तिर्यथा—

'मय्येवमस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने ।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ १९ ॥'

अत्र यद्यपि विभावानुभावव्यभिचारिसंयोगलक्षणाया रसनिष्पत्तेः 'अधिकमतिरुषातिलोहिताक्ष्या' इति प्रकर्षनिमित्तमतिशब्दोपादानं विद्यते, तथाप्युत्तमनायिकाश्रयः प्रियविषये न रोषः प्रकर्षमासादयति ॥

**कार्यारम्भेषु संरम्भः स्थेयानुत्साह इष्यते ॥ १४० ॥**

तद्रूपेण रसस्य जन्म यथा—

'मूर्ध्ना जाम्बवतोऽभिवाद्य चरणावापृच्छ्य सेनापती-
नाश्वास्याश्रुमुखान्मुहुः प्रियसखीन्प्रेष्यान्समादिश्य च ।
आरम्भं जगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने
रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन्मारुतिः ॥ २० ॥'

अत्राभिवादनप्रश्नाश्वासनसमादेशनाद्रिशिखरारोहणेष्टदेवतास्मरणानां

---

१. 'वीक्ष्यते' घ. २. 'मत्सरण' ख. ३. 'प्रतिपाद्यमाने' क. ४. 'विभावानुभावसंचारिसंयोग' क.ख. ५. 'देवस्मरणानां' घ.

पूर्वरङ्गपर्यवसायित्वेनानुद्दीपनविभावत्वादनुत्साहानुभावत्वाच्च नायमनुबन्धो निष्पत्तिः प्रकर्षो वा भवति ॥

**भयं चित्तस्य वैक्लव्यं रौद्रादिजनितं विदुः ।**

तद्रूपेण रसस्यानुबन्धो यथा—

'मन्त्रान्मृत्युजितो जपद्भिरसकृद्ध्यायद्भिरिष्टान्सुरान्
शुष्यत्तालुभिराकुलाकुलपदैर्निर्वाग्भिरुत्कम्पिभिः ।
अध्वन्यैरिह जीवितेशमहिषव्याधूम्रधूमाविला
लङ्घ्यन्ते करिमांसघस्मररणत्कौलेयकाः पल्लयः ॥ २१ ॥'

अत्र यद्यपि पल्लीनामालम्बनत्वम्, तद्विशेषणयोरुद्दीपनत्वम्, मन्त्रजपादेरनुभावत्वम्, तालुशोषादीनां व्यभिचारित्वमिति विभावानुभावव्यभिचारिसंयोगोऽस्ति, तथापि मन्त्रजपेष्टदेवतानुध्यानयोर्लङ्घनोपायपरत्वान्न भयरूपेण रसस्य निष्पत्तिः । अध्वन्यानां हि तन्निष्पत्तावल्पसत्त्वतया स्तम्भमोहमूर्च्छामरणादिभिरुपायप्रयोगो न घटते ॥

**जुगुप्सा गर्हणार्थानां दोषसंदर्शनादिभिः ॥ १४१ ॥**

तद्रूपेण रसस्यानुगमो यथा—

'हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसि निर्भरगर्भखिन्न-
सीताप्रवासनपटोः करुणा कुतस्ते ॥ २२ ॥'

अत्र यद्यपि द्विजशिशोर्जीवनाय मुनिरपि शूद्रो वध्य इति न रामस्यात्मकर्मनिन्दा तथाप्यनपकारिणं जिघांसतो घृणानुवर्तत एव। सीता-

---

१. 'रणात्कौलेयकाः' क., 'रुणत्कौलेयकाः' ग.घ. २. 'न तद्विशेषणयोः' ख. ३. 'रसनिष्पत्तिः' क. ४. 'रे हस्त' क.ख. ५. 'प्यनयकारिणं' ख. ६. 'घृणा प्रवर्तत इति सीतापरित्याग' क.ख.

परित्यागविषयत्वेनैवात्र जुगुप्सानुगमो ग्रहीतव्यः । शंम्बुकविषये पुनरस्या जन्ममात्रमेवेति ॥

**विस्मयश्चित्तविस्तारः पदार्थातिशयादिभिः ।**

तद्रूपेण रसंनिष्पत्तिर्यथा—

'कृष्णेनाम्ब गतेन रन्तुमसकृन्मृद्भक्षिता स्वेच्छया
सत्यं कृष्ण क एवमाह मुसली मिथ्याम्ब पश्याननम् ।
व्यादेहीति विकासिते च वदने दृष्ट्वा समस्तं जग-
न्माता यस्य जगाम विस्मयपदं पायात्स वः केशवः ॥ २३ ॥'

अत्र शिशोर्मुखे जगद्दर्शनमालम्बनविभावः, तत्सामग्र्यशैशवाद्यालोचनमुद्दीपनविभावः, विस्मयवशं जगामेत्यनेनानुपात्ता अपि सर्वे संचारिणोऽनुभावाश्च गृह्यन्ते ॥

**स्तम्भश्चेष्टाप्रतीघातो भयरागामयादिभिः ॥ १४२ ॥**

तद्रूपेण रसस्य पुष्टिर्यथा—

'तं ताणं हअच्छाअं णिच्चललोअणसिहं पउत्थपआवं ।
आलेक्खपईवाणिव णिअअं पअइचड्डुलत्तणं पि विअलिअं ॥२४॥'

[तत्तेषां हतच्छायं निश्चललोचनशिखं प्रोषितप्रतापम् ।
आलेख्यप्रदीपानामिव निजकं प्रकृतिचटुलत्वमपि विगलितम् ॥]

अयं च पुष्टोऽपि सात्त्विकत्वात् सदैवान्यानुयायीति नानुभावादिभिरनुबध्यते ॥

**हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया ।**

---

१. 'शम्बूकविषये' क. २. 'रसस्य जन्म यथा' क.ख. ३. 'रन्तुमधुना' क.ख. ४. 'मुशली' क.ख. ५. 'विदारिते तु वदने' क.ख. ६. 'शैशवाद्यालोकन' क.ख. ७. 'सर्वे संचारिणो' इत्यस्य स्थाने 'केवलं संचारिणः' क.ख. ८. 'तं ताणं' ख.

तद्रूपेण रसस्य जन्म यथा—

'करिमरि अआलगज्जिरजलआसणिपउणपडिरओ एसो ।
पइणो धणुरवकंखिणि रोमंचं किं मुहा वहसि ॥ २५ ॥'

[वन्दि अकालगर्जनजलदाशनिपतनप्रतिरव एषः ।
पत्युर्धनूरवाकाङ्क्षणशीले रोमाञ्च किं मुधा वहसि ॥]

अस्यापि सात्त्विकत्वादन्यानुबन्धादयो न जायन्ते ।

**मदप्रमदपीडादेर्वैस्वर्यं गद्गदं विदुः ।**

तद्रूपेण रसस्य निष्पत्तिर्यथा—

'पिपिप्रिय ससस्वयं मुमुमुखासवं देहि मे
ततत्यज दुदुद्रुतं भभभभाजनं काञ्चनम् ।
इति स्खलितजल्पितं मदवशात्कुरङ्गीदृशः
प्रगे हसितहेतवे सहचरीभिरध्येयत ॥ २६ ॥'

अत्रापि सात्त्विकत्वान्निष्पन्नो नान्यैरनुबध्यते ॥

**वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः ॥ १४२ ॥**

तद्रूपेण रसस्य जन्म यथा—

'हिमव्यपायाद्विशदाधराणामापाण्डुरीभूतमुखच्छवीनाम् ।
स्वेदोद्गमः किंपुरुषाङ्गनानां चक्रे पदं चित्रविशेषकेषु ॥ २७ ॥'

अत्रापि पूर्ववदन्यानुषङ्गो न भवति ॥

**रागरोषभयादिभ्यः कम्पो गात्रस्य वेपथुः ।**

तद्रूपेण रसस्य जन्म यथा—

'मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।

---

१. 'अयमपि' क.ख. २. 'पाण्डरीभूत' ख. ३. 'पत्रविशेषकेषु' क.ख.

अन्यापि किं न सखि भाजनमीदृशानां
वैरी न चेद्भवति वेपथुरन्तरायः ॥ २८ ॥'

अयमपि प्राग्वदेवान्यैर्नानुगम्यते।

**विषादमदरोषादेर्वर्णान्यत्वं विवर्णता ॥ १४४ ॥**

तद्रूपेण रसस्य निष्पत्तिर्यथा—

'सहि साहसु तेण समं अहं पि किं णिग्गआ पहाअम्मि।
अण्णच्चिअ दीसइ जेण दप्पणे कावि सा सुमुही ॥ २९ ॥'

[सखि साधय तेन सममहमपि किं निर्गता प्रभाते।
अन्यैव दृश्यते येन दर्पणे कापि सा सुमुखी ॥]

अयमपि नान्यैरनुबध्यते ॥

**अश्रु नेत्रोद्गतं वारि दुःखशोकप्रहर्षजम्।**

तद्रूपेण रसस्यानुबन्धो यथा—

'उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्ति
बाष्पं कुरु स्थिरतया शिथिलानुबन्धम्।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ ३० ॥'

अत्र बाष्पशब्देन लोचनाश्रयमश्रूच्यते न कण्ठाद्याश्रयो दुःखावेशः। यथा—'विललाप स बाष्पगद्गदम्', 'मुहुर्मग्नः कण्ठे तरलयति बाष्पः स्तनतटीम्' इत्यादि ॥

**प्रलयस्तीव्रदुःखादेरिन्द्रियास्तमयो मतः ॥ १४५ ॥**

तद्रूपेण रसस्य निष्पत्तिर्यथा—

'तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम्।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥ ३१ ॥'

---

१. 'नान्यैरनुगम्यते' क.ख. २. 'सहि साहसं तेण' क. ३. 'पहूअम्मि' ख. ४. 'मुहुर्लग्नः कण्ठे' क.ख. ५. 'इति' ख.

अत्र मोहशब्देन मूर्च्छोच्यते, न वक्ष्यमाणलक्षणो मोहः ॥

**स्मृतिः पूर्वानुभूतार्थविषयं ज्ञानमुच्यते ॥ १४६ ॥**

तद्रूपेण रसस्यानुबन्धो यथा—

'इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रसर[1]कलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥ ३२ ॥'

अत्र सविशेषा स्मृतिरिच्छया वागारम्भेण चानुबध्यते । निष्प[2]त्त्यादयः पुनरस्या रत्यादिनिष्पत्तिष्वेव द्रष्टव्याः । रत्यादयो[3]ऽस्मृतिमूलत्वात्तत्प्रकर्षापकर्षावनुवर्तन्ते ॥

**ऊहो वितर्क इत्युक्तः पदार्थेषु यथामति ।**

तद्रूपेण रसस्य निष्पत्तिर्यथा—

'चित्ते निवेश्य परिकल्पितसत्त्वयोगा-[4]
न्रूपोच्चयेन घटिता मनसा कृता नु ।[5]
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ३३ ॥'

सोऽयमसत्यः सत्यो वा स्मृतिज्ञानचिन्तनादिद्वारेण निर्णयान्तो निष्पन्न इत्युच्यते ॥

**उत्कण्ठेष्टानवाप्तौ योऽभिलाषः स्यात्तदाप्तये ॥ १४७ ॥**

तद्रूपेण रसस्य निष्पत्तिह्रासौ यथा—

'यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः[6] स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।

---

१. 'बाष्पप्रकर' क.ख. २. 'तिष्ठेत्यादयः' ख. ३. 'रत्यादयो हि स्मृतिमूलतत्प्रकर्षापकर्षावनुवर्तन्ते' क.ख. ४. 'सत्त्वयोगात्' क.ख. ५. 'विधिना विहिता कृताङ्गी' पाठः. ६. 'बाष्पस्तम्भितकण्ठवृत्तिवचनम्' ख.

वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ३४ ॥'

अत्र विभावानुभावव्यभिचारिसंयोगात् प्रीतिरिवोत्कण्ठापि तदनुषङ्गिणी निष्पन्ना उत्तरार्धप्रतिपाद्येन [1]निषेधेनैव विस्मयादिनाभिभूयमाना ह्रास इत्युच्यते। प्रकर्षश्चास्या ममारण्यौकस इत्यनेन निवार्यते ॥

**प्रयत्नपूर्विकार्थेषु स्मृतिश्चिन्तेति चोच्यते [3] ॥ १४८ ॥**

तद्रूपेण रसस्य प्रकर्षो यथा—

'चिन्ताणिअदइअसमागमम्मि कअमण्णुआइं [4] मरिऊण।
सुण्णं कलहाअन्ती सहीहिँ [5] रुण्णा णँ [6] ओ हसिआ ॥ ३५ ॥'

[चिन्तानीतदयितसमागमे कृतमन्युकानि स्मृत्वा।
शून्यं कलहायमाना सखीभी रुदिता न वा हसिता ॥]

अत्र सखीरोदनेन शून्यकलहः, शून्यकलहेन साक्षात्कारः, साक्षात्कारेण चिन्ता, चिन्तया तु मूलभूता रतिः प्रकृष्यते ॥

**आत्मप्रकाशनपरा चेष्टा चपलतोच्यते ॥ १४९ ॥**

तद्रूपेण रसस्य जन्म यथा—

'कश्चित्कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम्।
रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयांचकार ॥ ३६ ॥'

अ[7]त्र कश्चिल्लीलारविन्दभ्रमणचेष्टया ई[8]न्दुमत्यै तिष्ठते ॥

**शास्त्रोक्तार्थानुसंधानादर्थनिर्धारणं मतिः।**

---

१. 'न' ख. २. 'तथाविधेनैव' ख. ३. 'कथ्यते' क.ख. ४. 'मण्णुआइ' ख. ५. 'सहीहि' ख. ६. 'नावहसिआ' घ. ७. 'अत्र लीलारविन्दभ्रमणचेष्टया' क.ख. ८. 'कश्चिदिन्दुमत्यै' क.ख.

तद्रूपेण रसस्यानुबन्धो यथा—

'असंशयं क्षत्रपरिग्रहक्षमा
यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥ ३७ ॥'

अत्र पूर्वार्धोक्तार्थनिर्धारणरूपा मतिरुत्तरार्धेनानुबध्यते ॥

**गर्वोऽन्येषामवज्ञानमात्मसंभावनादिभिः ॥ १५० ॥**

तद्रूपेण रसस्य पुष्टिर्यथा—

'धृतायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति ॥ ३८ ॥'

अत्र कर्णस्यात्मसंभावनयाश्वत्थामेन्यवज्ञा प्रकृष्यते ॥

**अहेतुरनिवर्ती च स्नेहश्चित्तार्द्रता मता ।**

तद्रूपेण रसस्य निष्पत्तिर्यथा—

'अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैतत् ।
कां निर्वृतिं चेतसि तस्य कुर्या-
द्यस्यायमङ्गात्कृतिनः प्ररूढः ॥ ३९ ॥'

अत्र दुष्यन्तस्य सर्वदमनदर्शनादुत्पन्नस्तदङ्गस्पर्शसुखादिभिरुद्दीपितः स्पृहामतिवितर्कवागारम्भैः संसृज्यमानः स्नेहो निष्पद्यते ॥

**अभीष्टार्थस्य संप्राप्तौ स्पृहापर्याप्तता धृतिः ।**

---

१. 'अभिज्ञानम्' घ. २. 'अवज्ञानम्' क.ख. ३. 'अनिवर्त्या च' क.ख. ४. 'रसनिष्पत्तिर्यथा' घ. ५. 'यस्यायमङ्कात्कृतिनः प्ररूढः.' ६. सर्वदमनः शकुन्तलातनयः.

तद्रूपेण रसस्य प्रकर्षो यथा—

'नीतो विक्रमबाहुरात्मसमतां प्राप्येयमुर्वीतले
सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया।
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोसलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मिन्करोमि स्पृहाम् ॥४०॥'

अत्र वत्सराजस्य सर्वात्मना मनोरथसिद्धयो धृतेः प्रकर्षमावहन्ति॥

**चेतोनिमीलनं व्रीडान्यङ्गरागस्तवादिभिः ॥ १५१ ॥**

तद्रूपेण रसस्य प्रकर्षे क्रोधशोकाभ्यां संकरो यथा—

'अक्षुद्रारिकृताभिमन्युनिधनप्रोद्भूततीव्रक्रुधः
पार्थस्याकृतशात्रवप्रतिकृतेरन्तःशुचा मुह्यतः।
कीर्णा बाष्पकणैः पतन्ति धनुषि व्रीडाजडा दृष्टयो
हा वत्सेति गिरः स्फुरन्ति न पुनर्निर्यान्ति कण्ठाद्बहिः ॥४१॥'

अत्रार्जुनस्यान्यायेनाभिमन्युवधादुद्भूतौ दीप्तावेव क्रोधशोकावुद्भूतविप्रतीकारोत्थया तथाविधयैव व्रीडया संकीर्येते। तथाहि क्रोधशोकयोरनुभावभूता दृष्टयो वाचश्च व्रीडाजडा इति विशेषणानि संबध्यन्ते॥

**अवहित्थं तु लज्जादेर्हर्षाद्याकारगोपनम् ॥ १५२ ॥**

तद्रूपेण रसस्यानुबन्धो यथा—

'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती ॥ ४२ ॥'

---

१. 'रसनिष्पत्तिर्यथा' घ. २. 'कोशलाः' ख. ३. 'यस्मै' रत्नावल्या मुद्रिते पाठः. ४. 'न्वङ्ग' ख. ५. 'रसप्रकर्षात्' क.ख. ६. 'कोपशोकाभ्यां' ख. ७. 'निधनासंक्रान्ततीव्रक्रुधः' क.ख. ८. 'अकृतविप्रतीकारोत्थया' घ. ९. 'व्रीडा इति विशेषणानि' घ.

अत्र—

'प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् ।
चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभिः ॥ ४३ ॥'

इत्यादेर्देवर्षिवाक्यादुद्भूतः प्रहर्षाकारो गुरुसंनिधौ लज्जितया लीलाकमलपत्रगणनव्याजेन गौर्या गोप्यते ॥

**सुखदुःखादिजनितो मोहश्चित्तस्य मूढता ।**

तद्रूपेण रसनिष्पत्तिर्यथा—

'कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धना-
द्वासो विश्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम् ।
एतावत्सखि वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः
कोऽयं का वयमत्र किं नु सुरतं स्वल्पापि मे न स्मृतिः ४४'

अत्र स्थायिनी रतिर्मोहनिष्पत्त्या प्रकृष्यते ॥

**संमोहानन्दसंभेदो मदिरादिकृतो मदः ॥ १५३ ॥**

तद्रूपेण रसस्य निष्पत्तिर्यथा—

'घूर्णमाननयनं स्खलत्कथं स्वेदबिन्दुमदकारणस्मितम् ।
आननेन न तु तावदीश्वरश्चक्षुषा चिरमुमासुखं पपौ ॥ ४५ ॥'

अत्र नयनघूर्णनाकारणस्मितादयः संमोहानन्दसंभेदादुद्भवन्तो मदं निष्पादयन्ति ।

**मनःप्रसादो हर्षः स्यादिष्टावाप्तिस्तवादिभिः ।**

---

१. 'इत्यादिदेवर्षिवाक्यादुद्भूतः' घ. 'इत्यादेर्मुनिवाक्यादुद्भूतः' क. ख. २. 'उद्भूतप्रहर्षाकारो' ख. ३. 'गणनेन' क.ख. ४. 'रसस्य निष्पत्तिः' ख. ५. 'कोऽसौ कासि रतं नु किं कथमिति' क.ख. ६. 'संभेदा उद्भवन्तो' ख.

तद्रूपेण रसस्य[1] प्रकर्षो यथा—

'जातस्य ते पितुरपीन्द्रजितो निहन्तु-
र्वत्सस्य वत्स कति नाम दिनान्यमूनि ।
तस्याप्यपत्यमधितिष्ठति वीरधर्मे[2]
दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ॥ ४६ ॥'

अत्र दशरथसुहृदः[3] सुमन्त्रसारथेः प्रभुकुलस्य[4] प्रतिष्ठामाशंसतस्तत्सूनुमिन्द्रजितो हन्तारं पश्यतो मनोरथावाप्त्या हर्षो निष्पन्नस्तदपत्येऽपि वीरधर्मचारिणि प्रकृष्टो दिष्ट्येत्यव्ययेन सूच्यते ॥

**क्रोधः कृतापराधेषु[5] स्थिरोऽमर्षत्वमश्नुते ॥ १५४ ॥**

तद्रूपेण रसस्य प्रकर्षो यथा—

'लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य[6] ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥ ४७ ॥'

अत्र भीमसेनस्य[7] धार्तराष्ट्रेषु स्वस्था इति नाम्नोऽप्यसहनात्[8] लाक्षागृहाद्यपकारजन्मामर्षः प्रतीयते[9] ॥

**असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता ।**

तद्रूपेण रसस्य जन्म यथा—

'वन्द्यास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते
सुन्दस्त्रीनिधनेऽप्यखण्डयशसो लोके महान्तो हि ते ।

---

१. 'रसनिष्पत्तिर्यथा' घ. २. 'वीरधर्मम्' घ. ३. 'दशरथस्य सुहृदः' घ. ४. 'प्रभुकुलप्रतिष्ठा' ख. ५. 'कृतापकारेषु' घ. ६. 'प्रकृत्य' घ. ७. 'भीमस्य' घ. ८. 'प्यसहमानात्' घ. ९. 'प्रकृष्यते' घ.

यानि त्रीणि कुतोमु[1]खान्यपि पदान्यासन्खरायोधने
　　यद्वा कौशलमिन्द्रसूनुदमने[2] तत्राप्यभिज्ञो जनः ॥ ४८ ॥'

अत्र यद्यपि सोल्लुण्ठदोषकीर्तनादिभिर्जुगुप्सा निष्पद्यते तथापि न तया स्वनिष्पत्तिहेतुरसूया संकीर्यते ॥

**ईर्षामाहुः समानेषु मानदानाद्यमर्षणम्[3] ॥ १५५ ॥**

तद्रूपेण रसस्य प्रकर्षो यथा—

'हुं[4] णिल्लज्ज समोसर तं च्चिअ अणुणेसु जाइ दे एअं ।
पाअग्गं[6]गुट्ठालत्तएण तिलअं विणिम्मविअं ॥ ४९ ॥'

[हुं निर्लज्ज समपसर तामेवानुनय यस्यास्त एतत् ।
पादाग्राङ्गुष्ठालक्तकेन तिलकं विनिर्मितम् ॥]

अत्र कस्याश्चित् प्रेयसि सपत्नीं प्रसादयितुं गते तन्मानममृष्यमाणायाः समुत्पन्नेर्ष्या प्रियानुनयादिभिर्भृशायमानतया निष्पन्नालक्तकतिलकानुमेयैस्तत्पादपतनादिभिरुद्दीप्ता हुंकाराक्षेपभर्त्सनप्रतिभेदाविनाभूतैर्भ्रूभङ्गताडनाङ्क्षेपवेपथुस्वेदगद्गदादिभिः संसृज्यमाना प्रकृष्यते ॥

**विषादश्चेतसो ग्लानिरुपायाभावनाशयोः ।**

तद्रूपेण रसस्य प्रकर्षो यथा—

'व्यर्थं[7] यत्र कपीन्द्रसख्यमपि मे क्लेशः कपीनां वृथा
　　प्रज्ञा जाम्बवतोऽपि यत्र न गतिः पुत्रस्य वायोरपि ।
मार्गं यत्र न विश्व[5]कर्मतनयः कर्तुं नलोऽपि क्षमः
　　सौमित्रेरपि पत्रिणामविषयस्तत्र प्रिया क्वापि मे ॥ ५० ॥'

---

१. 'त्रीण्यकुतोमुखानि' क., 'त्रीण्यकुतोभयानि' क. टिप्पण्याम्, 'त्रीणि कुतोमुखानि' ख. २. 'इन्द्रसूनुदलने' ग.घ. ३. 'मानदानाद्यमर्षणात्' ग. ४. 'हुम्' घ. नास्ति. ५. 'विश्व' ख. ६. 'पाअग्ग' ख. ७. 'वीर्यं हरीणां वृथा' क.ख.

अत्र सीतासमागमविषये रामस्य दृष्टावदानसुग्रीवसख्यादेरुपायस्याभावाद्विषादः प्रकृष्यते ॥

सत्त्वत्यागादनुत्कर्षो वाक्यादेर्दैन्यमुच्यते ॥ १५६ ॥

तद्रूपेण रसस्यानुबन्धो यथा—

'अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां भावप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्याधीनमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥ ५१ ॥'

अत्र स्नेहप्रभवं पादत्रयोक्तमर्थितादैन्यं तुरीयपादोपक्षिप्तयाच्ञादैन्यान्तरेणानुबध्यते ॥

विदुर्वाग्दण्डपारुष्यमुग्रतामपकारिषु ।

तद्रूपेण रसस्य प्रकर्षो यथा—

'प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ ५२ ॥'

अत्र माधवस्य प्रकृष्टापकारिण्यघोरघण्टे विषये प्रकृष्टमेव वाक्पारुष्यं दण्डपारुष्यं च जायते ॥

त्रासश्चित्तचमत्कार आकस्मिकभयादिभिः ॥ १५७ ॥

तद्रूपेण रसस्य जन्म यथा—

'परिस्फुरन्मीनविघट्टितो रवः सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ५३'

अत्र लोलदृष्टिता करावधूननं च स्त्रीणां स्वभावभीरुत्वविलासित्वाभ्यामपि भवतीति त्रासाविर्भावेऽप्यसमर्थमिति नानुबन्धो भवति ॥

**अनिष्टाभ्यागमोत्प्रेक्षां शङ्कामाचक्षते बुधाः ।**

तद्रूपेण रसस्य प्रकर्षो यथा—

'सहसा मा साहिज्जउ पिआगमो तीअ विरहकिसिआए ।
अच्चंतपहरिसेण वि जा अ मुआ सा मुआ च्चेअ ॥ ५४ ॥'

[सहसा मा साध्यतां प्रियागमस्तया विरहकृशया ।
अत्यन्तप्रहर्षेणापि या च मृता सा मृतैव ॥]

अत्र विरहिण्याः कार्श्यातिशयमुद्वीक्षमाणायाः कस्याश्चिद्वयस्यायाः स्नेहातिशयात् 'प्रेम पश्यति भयान्यपदेऽपी'ति प्रियागमप्रहर्षातिशयभावेऽप्यसहिष्णुतया तन्मरणशङ्का प्रकृष्यते ॥

**विरहादेर्मनस्तापः शरीरातङ्कदो[1] गदः ॥ १५८ ॥**

तद्रूपेण रसस्य जन्म यथा—

'स्थितमुरसि विशालं पद्मिनीपत्रमेतत्
कथयति न तथान्तर्मन्मथोत्थामवस्थाम् ।
अतिशयपरितापग्लापिताभ्यां यथास्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति ॥ ५५ ॥'

अत्र सागरिकायाः स्तननिहितसरोजिनीदलग्लापनेन वपुःसंतापो निष्पद्यते ॥

**बलस्यापचयो ग्लानिराधिव्याधिप्रकर्षभूः ।**

तद्रूपेण रसस्यानुबन्धो यथा—

'किसलयमिव मुग्धं बन्धनाद्विप्रलूनं[2]
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।

---

१. 'शरीरान्तकदो गदः' ख.　२. 'वन्दनाद्विप्रलूनम्' घ.

ग्लपयति परिपाण्डुक्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ ५६ ॥'

अत्र प्रकृष्टशोकानुबन्धिनी ग्लानिर्वैवर्ण्यक्षामताभ्यामनुबध्यते ॥

उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविप्लवः ॥ १५९ ॥

तद्रूपेण रसस्य जन्म यथा—

'क्काकार्यं क्व कलाधरस्य च कुलं भूयोऽपि दृश्येत सा
दोषाणामुपशान्तये श्रुतमहो कोपेऽपि शान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियो रेखैव सान्यादृशी
चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं धास्यति ५७'

अत्र विरहिणः पुरूरवस उत्कण्ठादिभिः प्रेमप्रकर्षादसत्प्रलापरूप उन्मादो निष्पद्यते ॥

आदरातिशयाच्चेतस्यावेगः संभ्रमो मतः।

तद्रूपेण रसस्य संकरो यथा—

'अलमलमतिमात्रं साहसेनामुना ते
त्वरितमपि विमुञ्च त्वं लतापाशमेनम्।
चलितमिव निरोद्धुं जीवितं जीवितेशे
क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥ ५८ ॥'

अत्र रतिजन्मा संभ्रमातिशयो रतिजन्मनैव मतिप्रकर्षेण संकीर्यते ॥

मनःशरीरयोः खेदः क्रियातिशयतः श्रमः ॥ १६० ॥

तद्रूपेण रसस्य संकरो यथा—

'स्खलयति वचनं ते संश्रयत्यङ्गमङ्गं
जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून्।

---

१. 'क्काकार्यं शशलक्ष्मणः' विक्रमोर्वशीये। 'क्काकार्यं क्व कलाकरस्य' च. ख., 'क्व कलाधरस्य' च. ख. २. 'लेखैव' घ.

मुकुलयति च नेत्रे सर्वथा सुभ्रु खेद-
स्त्वयि विलसति तुल्यं वल्लभालोकनेन ॥ ५९ ॥'

अत्र मालत्याः पुष्पावचयजन्मा श्रमः, माधवावलोकनजा च रतिः, खेदगद्गदाङ्गसादनयनमुकुलैस्तुल्यधर्मिणौ मिथः संकीर्येते ॥

**चित्तस्य खेदो निर्वेदस्तत्त्वज्ञानोदयादिभिः ।**

तद्रूपेण रसस्य शेषो यथा—

'जरामरणदौर्गत्यव्याधयस्तावदासताम् ।
मन्ये जन्मैव धीराणां भूयोभूयस्त्रपाकरम् ॥ ६० ॥'

अत्र मोक्षायोत्सहमानस्य कस्यचिन्निर्वेदावगमो गम्यते ॥

**क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठाभयादिभिः ।**

तद्रूपेण रसस्य निष्पत्तिर्यथा—

'शिथिलशिथिलं न्यस्य स्वैरं धनुःशिखरे शिरो
नयनसलिलैः कुर्वन्मौर्वीलतामपरामिव ।
अहह विकलः श्रुत्वा श्रुत्वा घनस्तनितध्वनिं
किमपि किमपि ध्यायन्नार्यो न याति न तिष्ठति ॥ ६१ ॥'

अत्र विरहिणो रामस्य क्रियास्वपाटवं निष्पाद्यते ॥

**क्रियाविद्वेष आलस्यं सुखसंविन्मदादिभिः ॥ १६१ ॥**

तद्रूपेण रसस्य निष्पत्तिर्यथा—

'घरिणिघणत्थणपेल्लणसुहेल्लिपडिअस्स होन्तपहिअस्स ।
अवसउणङ्गारअवारविट्ठिदिअहा सुहावेन्ति ॥ ६२ ॥'

[गृहिणीघनस्तनप्रेरणसुखकेलिपतितस्य भविष्यत्पथिकस्य ।
अपशकुनाङ्गारकवारविष्टिदिवसाः सुखयन्ति ॥]

---

१. 'माधवालोकनेन' घ. २. 'रसनिष्पत्तिः' घ. ३. 'पेक्खण' घ. ४. 'णिपडिअस्स' क.ख. ५. 'होन्ति' क.ख. ६. 'अवसदुणंगर' ख. ७. 'दिअसा सुहावेन्ति' क.ख.

अत्र रतिसुखानुभवाज्जिगमिषोरप्यगच्छत आलस्यं निष्पद्यते ॥

**निद्रा व्यापारवैमुख्यमिन्द्रियाणां श्रमादिभिः ।**

तद्रूपेण रसस्यानुबन्धो यथा—

'णिद्दालसपरिघुम्मिरतंसवलन्तद्धतारआलोआ ।
कामस्स वि दुव्विसहा दिट्ठिणिवाआ ससिमुहीए ॥ ६३ ॥'

[निद्रालसपरिघूर्णनशीलतिर्यग्वलदर्धतारकालोकाः ।
कामस्यापि दुर्विषहा दृष्टिनिपाताः शशिमुख्याः ॥]

अत्र रतिश्रमजागरादिजनितनिद्रालसा दृष्टिनिपातास्तारकाघूर्णनत्र्यस्रवलनादिभिरनुबध्यन्ते ॥

**निद्रादिजनितं सुप्तमिन्द्रियादिनिमीलनम् ॥ १६२ ॥**

तद्रूपेण रसप्रकर्षो यथा—

'ओसुअइ दिण्णपडिवक्खवेअणं पसिढिलेहिँ अङ्गेहिँ ।
णिव्वत्तिअसुरअरसाणुबंधसुहणिब्भरं सोण्हा ॥ ६४ ॥'

[अवस्वपिति दत्तप्रतिपक्षवेदनं प्रशिथिलैरङ्गैः ।
निर्वर्तितसुरतरसानुबन्धसुखनिर्भरं स्नुषा ॥ ]

अत्र निर्भरपदेनैव प्रकर्षः प्रतिपाद्यते ॥

**निद्रापगमहेतुभ्यः प्रबोधश्चेतनागमः ।**

तद्रूपेण रसस्यानुबन्धो यथा—

'प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा-
मात्मव्यापारगुर्वी जनितजललवाजृम्भणैः साङ्गभङ्गैः ।

---

१. 'रसानुबन्धो' घ. २. 'घुण्णिरतं' ख., 'घुम्मिरतं' ग., 'घुम्मिरत' घ. ३. 'संवलतद्धा' क. ४. 'घूर्णनास्रचलनादिभिः' क., 'घूर्णनत्र्यस्रचलनादिभिः' ख. ५. 'निद्रालसदृष्टिनिपाताः' क.ख. ६. 'बाह्येन्द्रियनिमीलनम्' क.ख. ७. 'रसस' ग. ८. 'पडिवक्खे अणं' ख. ९. 'निब्भरं' क.

नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥६५॥'

अत्र दृष्टेः प्रत्यग्रोन्मेषजिह्मतादिभिः प्रबोधो नाद्यापि निष्पद्यत इति प्रतीयते ॥

**उक्ता भावादिभेदेन तेऽमी रत्यादयो रसाः ।**
**अथैतेष्वेव केषांचिद्विशेषानभिदध्महे ॥ १६३ ॥**

तत्र

**शृङ्गारवीरकरुणरौद्राद्भुतभयानकाः ।**
**बीभत्सहास्यप्रेयांसः शान्तदान्तोद्धता रसाः ॥ १६४ ॥**
**रतिर्निसर्गसंसर्गौपम्याध्यात्माभियोगजा ।**
**संप्रयोगाभिमानोत्था विषयोत्था च कथ्यते ॥ १६५ ॥**
**प्रीतिरप्येवमेव स्यान्न त्वस्यां सांप्रयोगिकी ।**
**आभ्यासिकी तु तत्स्थाने तदुदाहृतयो यथा ॥ १६६ ॥**

'मृतेति प्रेत्य संगन्तुं यया मे मरणं मतम् ।
सैवावन्ती मया लब्धा कथमत्रैव जन्मनि ॥ ६६ ॥'

अत्र स्थायिनो विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति रतिरेव शृङ्गाररूपेण निष्पद्यते । अत्रावन्त्या वासवदत्ताया आलम्बनविभावभूतायाः सकाशादुत्पन्नो वत्सेश्वरस्य रतिस्थायिभावः, तस्याः पुनर्जीवनादिभिरुद्दीपनविभावैरुद्दीप्यमानो मृतेत्यादिना वागारम्भानुभावेनानुमीयमानैर्हर्षधृतिप्रभृतिभिः सुखात्मकैर्व्यभिचारिभिः संसृज्यमानः करुणानन्तरः संभोगः शृङ्गाराख्यां लभते ॥

---

१. 'नागाङ्गं' क. ख. २. 'निद्राच्छेदातिताम्रा' क. ख. ३. 'अभ्यासिकी' क., 'अन्यासिकी' ख.

'अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ।
अदत्त्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥ ६७ ॥'

अत्र वसुधाविजयादेरालम्बनविभावादुत्पन्नः स्थाय्युत्साहभावः स्थैर्यधैर्यादिभिरुद्दीपनविभावैरुद्दीप्यमानैः समुत्पन्नेषु वागारम्भानुमीयमानेषु स्मृतिमतिवितर्कादिषु निष्पन्नो वीररससंज्ञया व्यवह्रियते ॥

'यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी ।
साधिशेते कथं देवी हुताशनवतीं चिताम् ॥ ६८ ॥'

अत्र चालम्बनविभावभूतदेवीमरणादुत्पन्नः शोकः स्थायिभावश्चितानिवेशनहुताशनाङ्गज्वालादिभिरुद्दीपनविभावैरुद्दीप्यमानो वागारम्भानुमेयैर्निर्वेदग्लानिवैवर्ण्यादिभिर्व्यभिचारिभिः संसृज्यमानः करुण इति ज्ञायते ॥

'निगृह्य केशेष्वाकृष्टा कृष्णा येन ममाग्रतः ।
सोऽयं दुःशासनः पापो लब्धः किं जीवति क्षणम् ॥ ६९ ॥'

अत्र दुःशासनालम्बनविभावाय क्रुध्यतो भीमसेनस्य पूर्वमुत्पन्नः क्रोधः स्थायिभावस्तदवाप्तेः स्मर्यमाणसमक्षकृतद्रौपदीनिग्रहकेशकर्षणादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुत्पन्नेषु वागारम्भानुमीयमानेष्वसूयावेगवेपथुश्रमादिषु दुःखात्मकेषु व्यभिचारिषु निष्पद्यमानो[1] रौद्र इति निष्पद्यते ॥

'अंशुकानि प्रवालानि पुष्पं हारादिभूषणम् ।
फलं मधूनि हर्म्याणि शाखा नन्दनशाखिनाम् ॥ ७० ॥'

अत्र शाखिनां प्रवालपुष्पफलशाखासंपन्नं निजं रूपं नन्दनशाखिनां पुनः प्रवालादिस्थानेष्वंशुकहारमधुमन्दिराणि[2] तदेतदाश्चर्यम् । अतश्चैतेभ्य आलम्बनविभावेभ्यः कस्यचिद्देवभूयंगतस्य समुत्पन्नो विस्मयः[3]

१. 'निष्पाद्यमानो' ख. २. 'प्रवालादिस्थानेंशुकहार' क. ख. ३. 'विस्मयस्थायिभावः' क. ख.

स्थायिभावस्तदीयावयवदर्शनादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुत्पन्नेषु वागारम्भानुमेयेषु हर्षरोमोद्गमस्वेदगद्गदादिषु व्यभिचारिषु निष्पद्यमानोऽद्भुत इत्युच्यते ॥

'इदं मघोनः कुलिशं धारासंनिहितानलम् ।
स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते ॥ ७१ ॥'

अत्र महेन्द्रकुलिशाद्धारासंनिहितानलादालम्बनविभावात्स्मर्यमाणादपि दैत्यस्त्रीणामुत्पन्नो भयस्थायिभावस्तद्विदीर्णदानवमरणस्मरणादिभिरुद्दीपनविभावैरुद्दीप्यमानः स्वगर्भपातादिभिरनुभावादिभिस्तदनुमितैश्च स्वेदस्तम्भवेपथुप्रभृतिभिर्व्यभिचारिभिः संसृज्यमानो भयानकरसरूपेण निष्पन्नः केनचिदाख्यायमानोऽपि भयानक इत्याख्यायते ॥

'पायं पायं तवारीणां शोणितं पाणिसंपुटैः ।
कौणपाः सह नृत्यन्ति कबन्धैरन्त्रभूषणाः ॥ ७२ ॥'

अत्रालम्बनविभावभूतेभ्यः कौणपेभ्यः कस्यचिद्रिपुंजयशंसिनः पुंस उत्पन्नो जुगुप्सास्थायिभावः शिरश्छेदविगलद्रुधिरधारापरिप्लुतप्रर्णर्तितकबन्धकौणपान्त्रभूषणशोणितपानादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुत्पन्नेषु वागारम्भानुमेयेषु भयावेशशङ्कावहित्थादिषु व्यभिचारिषु निष्पन्नो बीभत्स इति निगद्यते ॥

'इदमम्लानमानाया लग्नं स्तनतटे तव ।
छाद्यतामुत्तरीयेण नवं नखपदं सखि ॥ ७३ ॥'

---

१. 'संनिहितानलालम्बन' ख. २. 'भयस्थायिभावः' क. ख. ३. 'सगर्भपातादिभिः' घ. ४. 'करसम्पुटैः' क. ख. ५. 'रिपुविजयाशंसिनः' ख. ६. 'प्रवर्तित' ख. ७. 'व्यभिचारादिषु' क.

अत्र काचित् सखीं पूर्वं भर्तरि गृहीतमानां तेनैव नखपदाङ्कितस्तनीमालम्बनविभावभूतामुपलभमानायाः कस्याश्चित्सख्या उत्पन्नो हासः स्थायिभावस्तदीयमानपरिग्रहस्मरणादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुत्पन्नेषु वागारम्भानुमितेषु शङ्कावहित्थगद्गदादिव्यभिचारिषु निष्पद्यमानो हास्यशब्देनाभिधीयते ॥

'यदेव रोचते मह्यं तदेव कुरुते प्रिया ।
इति वेत्ति न जानाति तत्प्रियं यत्करोति सा ॥ ७४ ॥'

अत्र वत्सलप्रकृतेर्धीरतया ललितनायकस्य प्रियालम्बनविभावादुत्पन्नः स्नेहस्थायिभावो विषयसौकुमार्यात्मप्रकृत्यादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुपजायमानैर्मोहधृतिस्मृत्यादिभिर्व्यभिचारिभावैरनुभावैश्च संसृज्यमानो निष्पन्नः प्रेयानिति प्रतीयते ॥

रतिप्रीत्योरपि चायमेव मूलप्रकृतिरिष्यते । यदित्थमाहुः—

'अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।
स हि स्नेहात्मकस्तन्तुरन्तर्मर्माणि सीव्यति ॥ ७५ ॥
सर्वाः संपत्तयस्तस्य संतुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः ॥ ७६ ॥'

अत्र कस्यचिदुपशान्तप्रकृतेर्धीरशान्तनायकस्य यथोपनतमनोनुकूलदारादिसंपत्तेरालम्बनविभावभूतायाः समुत्पन्नो धृतिस्थायिभावो वस्तुतत्त्वालोचनादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुपजायमानस्मृत्यादिभिर्व्यभि-

१. 'प्रगृहीतमानां' क. ख. २. 'पदाङ्कितस्तनाम्' ख. ३. 'निष्पाद्यमानो' क. ४. 'जानामि' ख. ५. 'यत्प्रियं तत्करोति सा' क.ख. ६. 'प्रियानुभाव' क.ख. ७. 'स्नेहस्थायिभावो' क. ८. 'मोहमतिधृतिस्मृति' क.ख. ९. 'प्रशंसादिभिः' इत्यधिकः पाठः क.ख. १०. 'चर्मावृतैव' क.ख. ११. 'धीरप्रशान्त' क.ख. १२. 'स्मृतिमत्यासत्या' क. 'स्मृतिमत्यादिभिः' ख.

चारिभावैर्वागारम्भादिभिरनुषज्यमानो निष्पन्नः शान्त इत्यभिगीयते ॥

अन्ये पुनरस्य शमं प्रकृतिमामनन्ति स तु धृतेरेव विशेषो भवति ॥

'साधारण्यान्निरातङ्कः कन्यामन्योऽपि याचते ।
किं पुनर्जगतां जेता प्रपौत्रः परमेष्ठिनः ॥ ७७ ॥'

अत्र रामस्योदात्तप्रकृतेर्निसर्गत एव तत्त्वाभिनिवेशिनी मतिर्नाकृत्यविषये प्रवर्तते, न च प्रवृत्तोपारमति, सा च सीतेयं मम स्वीकारयोग्येत्येवंरूपेण प्रवृत्ता रावणप्रार्थनालक्ष्मणप्रोत्साहनाभ्यामुद्दीप्यमाना समुपजायमानचिन्तावितर्कव्रीडावहित्थस्मृत्यादिभिः कालोचितोत्तरानुमीयमानैश्च विवेकचातुर्यौदार्यधैर्यादिभिः संसृज्यमानोदात्तरसरूपेण निष्पद्यते ॥

'अपकर्ताहमस्मीति मा ते मनसि भूद्भयम् ।
विमुखेषु न मे खड्गः प्रहर्तुं जातु वाञ्छति ॥ ७८ ॥'

अत्र मयास्यापकारः कृत इति यच्चेतसि भयं तन्माभूत् 'पराङ्मुखेषु मे खड्गः कदाचिदपि न प्रहर्तुमुत्सहते' इति सर्वदैव रूढोऽहंकारः प्रतीयते । सोऽयं गर्वप्रकृतिरुद्धतो नाम रसः । केचित् पुनः—

'आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु ।
व्यक्तिमायाति महतां माहात्म्यमनुकम्पया ॥ ७९ ॥'

इत्येवमूर्जस्वीत्युदात्तपक्षे निक्षिपन्तः पूर्वोक्तमेव गर्वप्रकर्षोदाहरणं धृतायुधो यावदहमित्याद्युद्धतनिष्पत्तौ वर्णयन्ति ॥

रतिविशेषेषु नैसर्गिकी यथा—

'इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमन्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति ॥ ८० ॥'

---

१. 'इति गीयते' क.ख. २. 'प्रवृत्तोपरमति' क.ख. ३. 'संसृज्यमान उदात्तरसरूपेण' क. ४. 'यत्ते चेतसि भयम्' ख. ५. 'न मम खड्गः पराङ्मुखेषु कदाचिदपि प्रहर्तुमुत्सहते' क.ख.ग. ६. 'अवमत्य मानिनी' क.ख.

अत्र जन्मान्तरवासनया निसर्गत इयं भवति ॥

सांसर्गिकी यथा—

'भित्त्वा सद्यः किसलयपुटान् देवदारुद्रुमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।
आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः
पूर्वस्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ ८१ ॥'

अत्र शैत्यसौरभादिभिर्विरहिजनोद्वेजनीया अपि वायवः प्रियतमाङ्ग-संसर्गसंभावनया समाश्लिष्यन्त इति संसर्गत इयं भवति ॥

औपमानिकी यथा—

'अपि जनकसुतायास्तच्च तच्चानुरूपं
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥ ८२ ॥'

सेयं सीताविषयिणी रतिस्तदुपमानदर्शनेन रामं रमयति ॥

आध्यात्मिकी यथा—

'कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मे चेतः ॥ ८३ ॥'

अत्र सेयं दुर्वाससः शापाद्विस्मृतविवाहादिवृत्तान्तस्य दुष्यन्तस्य शकुन्तलायां रतिरध्यात्मं भवति ॥

---

१. 'पूर्वं स्पृष्टम्' क.ख. २. 'विरहिण उद्वेजनीया' क.ख. ३. 'समालिङ्गयन्त इति संसर्गादियं रतिर्भवति' क.ख. ४. 'शतपत्रमीव' क. ५. 'रमयते' क.ख. ६. 'कामं प्रत्यादिष्टम्' क.

आभियोगिकी यथा—

'अलसवलितमुग्धस्निग्धनिष्पन्दमन्दै-
रधिकविकसदन्तर्विसयस्मेरतारैः ।
हृदयमशरणं[1] मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपविद्धं पीतमुन्मूलितं च ॥ ८४ ॥'

सेयमनुरागातिशयसूचकमालतीकटाक्षाभियोगे माधवस्य रतिरती-[2]वोत्पद्यते ॥

सांप्रयोगिकी यथा—

'उन्नमय्य सकचग्रहमास्यं
चुम्बति प्रियतमे हठवृत्त्या ।
हुंहुँ मुञ्च ममेति च मन्दं
जल्पितं जयति मानधनायाः ॥ ८५ ॥'

अत्र तर्जनार्थ—मोक्षार्थ—वारणार्थानां मन्दं मन्दं प्रयोगान्मानवत्याः संप्रयोगे रत्युत्पत्तिः प्रतीयते ॥

आभिमानिकी यथा—

'इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः[3] ।
अयं बाहुः कण्ठे शिशिरमसृणो[4] मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ ८६ ॥'

अत्र रुचिविशेषोऽभिमानस्तत एवंप्राया रतयो भवन्ति ॥

---

१. 'हृदयमशरणं मे' क.  २. 'रतिरेवोत्पद्यते' क.ख.  ३. 'बहुलः' ख.
४. 'शिशिरसमृणो' घ.

वैषयिकीषु[1] शब्दे यथा—

'विलासमसृणोल्लसन्मुसललोलदोष्कन्दली-
परस्परपरिस्खलद्वलयनिःस्वनोद्वन्धुराः ।
लसन्ति कलहुंकृतिप्रसभकम्पितोरःस्थले-[2]
त्रुटद्गमकसंकुलाः[3] कलमकण्डनीगीतयः[4] ॥ ८७ ॥'

स्पर्शे यथा—

'बध्नन्नङ्गेषु रोमाञ्चं कुर्वन्मनसि निर्वृतिम् ।
नेत्रे निमीलयन्नेष प्रियास्पर्शः प्रवर्तते ॥ ८८ ॥'

रूपे यथा—

'ता राघवं दृष्टिभिरापिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।
तथा हि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ८९'

रसे यथा—

'कस्य नो कुरुते मुग्धे[5] पिपासाकुलितं मनः ।
अयं ते विद्रुमच्छायो मरुमार्ग इवाधरः ॥ ९० ॥'

गन्धे[6] यथा—

'रन्धणकम्मणिउणिए मा जूरसु[7] रत्तपाडलसुअन्धम् ।
मुहमारुअं पिअन्तो धूमाइ सिही ण पज्जलइ ॥ ९१ ॥'

[रन्धनकर्मनिपुणिके मा क्रुध्यस्व[8] रक्तपाटलसुगन्धम् ।
मुखमारुतं पिबन् धूमायते शिखी न प्रज्वलति ॥]

---

१. 'वैषयिकी शब्देषु यथा' क. २. 'कम्पितोरःस्थली' ख. ३. 'लुटद्गमकसंकुलाः' ख. ४. 'कलमकण्डनी' घ. ५. 'तन्वि' क.ख. ६. 'गन्धो यथा' ख. ७. 'मा ऊरसु' क., 'मा झुरसु' ख. ८. 'मा खिद्यस्व' इति घ-पुस्तके च्छाया.

प्रीतिविशेषेषु नैसर्गिकी यथा—

'आलक्ष्य दन्तमुकुलाननिमित्तहासा-
नव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ ९२ ॥'

अत्र यदा यदा रतिर्जायते तदा तदा पुत्रेषु स्निह्यति पुत्ररूपेण वा जायत इति जन्मान्तरवासनारूपो निसर्गः संगच्छते ॥

सांसर्गिकी यथा—

'विश्वंभरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते ।
तेषां वधूस्त्वमसि नन्दिनि पार्थिवानां
येषां कुले च सविता च गुरुर्वयं च ॥ ९३ ॥'

अत्र विश्वंभरादिसंसर्गात् सीतायां वसिष्ठमिश्राः स्निह्यन्ति ।

औपमानिकी यथा—

'कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो
बटुपरिषदं पुण्यश्रीकः श्रियैव सभाजयन् ।
पुनरिव शिशुर्भूत्वा वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥ ९४ ॥'

अत्र रामौपम्याल्लवे जनकः प्रीयते ॥

आध्यात्मिकी यथा—

'परितस्तं पृथासूनुः स्नेहेन परितस्तरे ।
अविज्ञातेऽपि बन्धौ हि बलात्प्रह्लादते मनः ॥ ९५ ॥'

---

१. 'निमित्तसारान्' क., 'निमित्तहासैः' ख. २. 'परुषीभवन्ति' ग. ३. 'अत्र यदा रतिर्जायते तदा पुत्रेषु स्निह्यति' ख. ४. 'कुलेषु' क.ख. ५. 'प्रह्लादते' ख.

अत्राविज्ञातोऽपि वासवः स्वसूनुमर्जुनं दृष्टः प्रीणयति ॥

आभियोगिकी यथा—

'[1]अज्ञातबन्धुरयमृक्षहरीश्वरो मे
प्रौलस्त्य एष समरेषु पुरः प्रहर्ता ।
इत्यादृतेन कथितौ रघुनन्दनेन
[2]व्युत्क्रान्तलक्ष्मणमुभौ भरतो ववन्दे ॥ ९६ ॥'

अत्र सीतान्वेषणादेरभियोगाद्रामस्य सुग्रीवबिभीषणयोः प्रीतिरु[3]द्यते । सांप्रयोगिकीस्थाने आभ्यासिकी यथा—

'इति विस्मृतान्यकरणीयमात्मनः
सचिवावलम्बितधुरं नराधिपम् ।
परिवृद्धरागमनुबद्धसेवया
मृगया जहार चतुरेव कामिनी ॥ ९७ ॥'

अत्र

'शब्दादिभ्यो बहिर्भूता या कर्माभ्यासलक्षणा ।
प्रीतिः साभ्यासिकी ज्ञेया मृगयादिषु कर्मसु ॥'

इति लक्षणं घटते ॥

आभिमानिकी यथा—

'दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादामनो-
र्दृप्तानां दहनाय दीपितनिजक्षात्रप्रतापाग्निभिः ।
आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत्ततो
दीप्तास्त्रस्फुरदुग्रदीधितिशि[4]खानीराजितज्यं धनुः ॥ ९८ ॥'

---

१. 'दुःखैकबन्धु' क. ख. २. 'व्युत्क्रम्य' क. ख. ग. ३. 'रुत्पद्यते' क. ख. ४. 'दीधितिभरैर्नीराजितज्यं' क. ख.

अत्राभिमतप्रतिद्वन्द्विलाभाल्लवानुपदी कुशस्तुष्यति ॥

वैषयिकीषु[1] शब्दे यथा—

'लावण्यैः क्षणदाविराममधुराः किंचिद्विनिद्रालस-[2]
श्रोत्रैः सव्रणमुग्धचारणवधूदन्तच्छदावासिनः ।
पीयन्ते मृदुवक्रपीतमरुतः पौराणरीतिक्रम-[3]
व्यालोलाङ्गुलिरुद्धशुक्तसुषिरश्रेणीरवा वेणवः ॥ ९९ ॥'

स्पर्शे यथा—

'प्रशान्तघर्माभिभवः शनैर्विवान्विलासिनीभ्यः परिमृष्टपङ्कजः ।
ददौ भुजालम्बमिवात्तशीकरस्तरङ्गमालान्तरगोचरोऽनिलः ॥१००॥'

रूपे यथा—

'अयमभिनवमेघश्यामलोत्तुङ्गसानु-
र्मदमुखरमयूरीमुक्तसंसक्तकेकः ।
शकुनिशबलनीडानोकहस्निग्धवर्ष्मा
वितरति बृहदश्मा पर्वतः प्रीतिमक्ष्णोः ॥ १०१ ॥'

रसे यथा—

'इक्षुदण्डस्य मण्डस्य दध्नः पिष्टकृतस्य च ।
वराहस्य च मांसस्य सोऽयं गच्छति फाल्गुनः ॥ १०२ ॥'

गन्धे यथा—

'कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्नुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति ॥१०३'

उपलक्षणं चैतत् । तेनोत्साहस्य युद्धदानदयावीरादयः, क्रोधस्य

---

१. 'वैषयिकी यथा–' क. २. 'विनिद्रालसं' क. ख. ३. 'गीतिक्रम' क. ख. ४. 'मुक्त' क ख. ५. 'श्रेणीधरा' क. ख. ६. 'बद्धविश्रब्धनृत्यः' घ. ७. 'पिष्टघृतस्य' क. ख. ८. 'वराहस्य' क. ख. ९. 'स्नुत' ग.

[1]भाममन्यूत्प्रासादयः, हासस्य स्मितहसितविहसितादयः, [2]सुप्तप्रलयमत्यादीनां [3]तु स्वप्नमरणशमादयो भेदा जायन्ते । तत्र यद्यपि 'अजित्वा सार्णवामुर्वीम्' इत्यनेन युद्धवीरः, 'अनिष्ट्वा विविधैर्मखैः' इत्यनेन दानवीरः, 'अदत्त्वा चार्थमर्थिभ्यः' इत्यनेन दयावीरश्चोत्साहरूपेण [4]निष्पत्तौ वर्णितः, [5]तथाप्येकशोऽप्येते रसनिष्पत्त्यै प्रभवन्तीति प्रदर्श्यन्ते ॥

तेषु युद्धवीरो यथा—

'एतां पश्य [6]पुरःस्थलीमिह किल क्रीडाकिरातो हरः
कोदण्डेन किरीटिना सरभसं चूडान्तरे ताडितः ।
इत्याकर्ण्य कथाद्भुतं हिमनिधावद्रौ सुभद्रापते-
र्मन्दं मन्दमकारि येन निजयोर्दोर्दण्डयोर्मण्डनम् १०४'

दानवीरो यथा—

'दधिक्षीरघृताम्भोधिव्यञ्जनस्पृहणीयया ।
महादानोत्सवे यस्य हन्तकारायितं भुवा ॥ १०५ ॥'

दयावीरो यथा—

'स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं यतस्व ।
दिनावसानोत्सुकबालवत्सा विमुच्यतां धेनुरियं महर्षेः ॥ १०६ ॥'

क्रोधस्य यद्यपि [7]भीमादयो मानभेदा[8]श्चतुर्विंशतिः संभवन्ति तथापि ललिताललितोभयभेदेन रूपेण क्रमेण सर्वसंग्रहात्तत्र त्रय एव प्रकाराः प्रदर्श्यन्ते ॥

---

१. 'भीममन्युत्रासादयः' क.ख. २. 'प्रसुप्तप्रलयमत्यादीनां' क.ख. ३. 'तु' ख. क. पुस्तकयोर्नास्ति. ४. 'रसनिष्पत्तौ वर्तते' क.ख. ५. 'तथाप्येकशोऽप्येतद्रसनिष्पत्तिरस्तीति प्रदर्श्यन्ते' क.ख. ६. 'पुरस्तटी' क.ख. ७. 'भीकादयो' क., 'क्रोधस्य भीमादयो' ख. ८. 'मानभेदाः' इत्यस्य 'विशेषाः' इति टिप्पणरूपेण घ., 'विशेषाः' क.ख.

तेषु स्त्रीणां [1]ललितकोपो भामो यथा—

'भ्रूभेदिभिः प्रकम्पौष्ठैर्ललिताङ्गुलितर्जनैः ।
यत्र कोपैः कृता स्त्रीणां संप्रसादार्थिनः प्रियाः ॥ १०७ ॥'

प्रियापराधजन्मा दुःखोत्पीडो मन्युर्यथा—

'घणुओवप्पणवल्लरिविरइअकण्णावअंसदुप्पेच्छे ।
बाहगुरु[2]आ णि[3]सम्मइ बाहीएअ बहुमुहे दिट्ठी ॥ १०८ ॥'

[धनुधन्वपनवल्लरीविरचितकर्णावतंसदुष्प्रेक्ष्ये ।
बाष्पगुरुका निशाम्यति बाध्या वधूमुखे दृष्टिः ॥]

नन्वियमीर्ष्या कस्मान्न भवति, नात्र मानदानाम[4]र्षमात्रं विवक्षितमपि तु तज्जनितो दुःखातिशय इति ॥

प्रियादिषु व्याजनिन्दोत्प्रासो यथा—

'पहवंति च्चि[5]अ पुरिसा महिलाणं किं [6]थ सुहअ विहिओसि ।
अणुरा[7]अणोल्लिआए को दोसो [8]आहिजाईए ॥ १०९ ॥'

[प्रभवन्त्येव पुरुषा महिलानां किमत्र सुभग विहितोऽसि ।
अनुरागनोदितायाः को दोष आभिजात्यायाः ॥]

हासस्य यद्यप्युपहासादयो भेदाः संभवन्ति तथापि विहसितेन तेषां सं[9]ग्रहादीषन्न्यूनाधिकमिति त्र[10]यस्तद्भेदा उदाह्रियन्ते—

तत्रेषद्धसितं स्मितं यथा—

'पुष्पं प्रवालोपहितं यदि स्या-
न्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।

---

१. 'ललितः कोपाभावो यथा' क.ख. २. 'बाहगरुई' क.ख. ३. 'निसम्मइ' घ. ४. 'मानदानामर्षणमात्रविवक्षा' क.ख. ५. 'च्चिअ' क. ६. 'खु' क.ख. ७. 'लोलिआए' क.ख. ८. 'अपहजाइए' क., 'आहिजाइए' ख. ९. 'उपसंग्रहात्' ख. १०. 'त्रयस्त्रिंशद्भेदाः' घ.

ततोऽनुकुर्याद्विशदस्य तस्या-
स्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥ ११० ॥'

दृष्टदशनकान्ति हसितं यथा—
'तिमिरनिरुद्धभीमरजनीमुखचन्द्रिकया
गणपतिताण्डवाभिनयदर्शनदीपिकया।
अभिभवसि त्वमद्य शशिनः श्रियमुत्कटया
दशनमयूखमञ्जरितया हसितप्रभया ॥ १११ ॥'

तदेव सविशेषं हसितं यथा—
'च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं
द्वयं चक्रीकृत्य प्रहसितमुखी शैलतनया।
अवोचद्यं पश्येत्यवतु स शिवः सा च गिरिजा
स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः ॥ ११२ ॥'

सुप्तविशेषः स्वप्नो यथा—
'जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः।
नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥११३॥'

मूर्च्छाविशेषो मरणं यथा—
'क्षणमात्रसखीं सुजातयोः स्तनयोस्तामवलोक्य विह्वला।
निमिमील नरेन्द्रसुन्दरी हृतचन्द्रा तमसेव शर्वरी ॥११४॥'

---

१. 'गणयति' ख. २. 'श्रियमुत्कण्ठया' ख. ३. 'विहसितम्' क.ख. ४. 'प्रहसितवती' घ. ५. 'क्षणं' क.ख.

मतिविशेषः शमो[1] यथा—

'यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदिति ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ ११५ ॥'

एवमन्येऽपि विज्ञेया रस[2]भावादिसंश्रयाः ।
विशेषाः प्राप्तकालोऽथ प[3]रिशेषो नि[4]र्दिश्यते ॥ १६७ ॥

तत्राश्रयस्त्रिधा—पुमान्—स्त्री-तिर्यगादयः ॥

तेषु पुमान् यथा—

'आश्चर्यमुत्पलदृशो वदनामलेन्दु-
सांनिध्यतो मम मुहुर्जडिमानमेत्य ।
जात्ये[5]न चन्द्रमणिनेव महीधरस्य
संधार्यते द्रवमयो मनसा विकारः ॥ ११६ ॥'

स्त्री यथा—

'तेनाथ नाथ दुरुदाह[6]रणातपेन
सौम्यापि नाम परुषत्वमभिप्रपन्ना ।
जज्वाल तीक्ष्णविशदाः सहसोद्गिरन्ती[7]
वागर्चिषस्तपनकान्तशिलेव सीता ॥ ११७ ॥'

तिर्यगादिषु यथा—

'उत्कूजति श्वसिति मुह्यति याति तीरं
तीरात्तरुं तरुतलात्पु[8]नरेति वापीम् ।

---

१. 'स्वप्नो यथा' 'नरोत्तमप्रिया' S. P. Pandit संपादिते रघुवंशे. २. 'रसाभावादि' क.ख. ३. 'परिशेषो' क., 'परिपोषो' ख. ४. 'निगद्यते' क.ख. ५. 'जाड्येन' ख. ६. 'दुरदाहरणातपेन' ख. ७. 'सहसोद्गिरन्तीः' क.घ. ८. 'पुनरेव' क.ख.

वाप्यां न रज्यति न चात्ति मृणालखण्डं
चक्रः क्षपासु विरहे खलु चक्रवाक्याः ॥ ११८ ॥'

विषयस्त्रिधा—चेतनः, तिर्यग्, अचेतनश्च ॥

तेषु चेतनो यथा—

'इयं सा लोलाक्षी त्रिभुवनललामैकवसतिः
स चायं दुष्टात्मा स्वसुरपकृतं येन मम तत्।
इतस्तीव्रः कामो गुरुरयमितः क्रोधदहनः
कृतो वेषश्चायं कथमिदमिति भ्राम्यति मनः ॥ ११९ ॥'

तिर्यग् यथा—

'आयाते दयिते मरुस्थलभुवां [1]संचिन्त्य दुर्लङ्घ्यतां
गेहि[2]न्या परितोषबाष्पतरलामासज्य दृष्टिं [3]मुखे।
दत्त्वा पीलुशमीकरीरकवलान् स्वे[4]नाञ्चलेनादरा-
दुन्मृष्टं करभस्य केसरसटाभाराग्र[5]लग्नं रजः ॥ १२० ॥'

अचेतनो यथा—

'क्षिप्तं पुरो न जगृहे मुहुरिक्षुकाण्डं
नापेक्षते स्म निकटोपगतां करेणुम्।
सस्मार वारणपतिः परिमीलिताक्ष-
मिच्छाविहारवनवासमहोत्सवा[6]नाम् ॥ १२१ ॥'

ज्ञानं त्रिधा—दृष्टम्, श्रुतम्, अनुमानजं च ॥

---

१. 'उद्वीक्ष्य' सुभाषितावलौ, 'उत्प्रेक्ष्य' शार्ङ्गधरपद्धतौ. २. 'तन्वङ्गया' सुभाषितावलौ, 'गेहिन्याः' ख. ३. 'मयि' क.ख. ४. 'लोलाञ्चलेन' शार्ङ्गधरपद्धतौ. ५. 'भारावलग्नं रजः' सुभाषितावलौ. ६. 'महोत्सवान्तम्' ख.

तेषु दृष्टं यथा—

'सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं[1] नाकृतीनाम् ॥ १२२ ॥'

श्रुतं यथा—

'किं रूपं स्फुटमेव सा शशिमुखी धत्ते तदत्यद्भुतं
मामुत्साहयितुं परापकरणे चित्तं किमस्मत्प्रभुः ।
इत्यन्तर्विकसद्वितर्कविधुरं चेतस्तथा वर्तते
स्वल्पोऽप्येष मम प्रयाति पुरतः पन्था यथा दीर्घताम् १२३'

अनुमानं यथा—

'शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ १२४ ॥'

संस्कारस्त्रिधा—आदृतः, पटुः, अभ्यस्तश्चेति[2] । तत्राश्रयगुणेनादर-[3]प्रत्ययादुत्पन्न आदृतो यथा—

'कन्यारत्नमयोनिजन्म भवतामास्ते वयं चार्थिनो
रत्नं यत्[4]क्वचिदस्ति तत्परिणमत्यस्मासु शक्रादपि ।
कन्यायाश्च परार्थतैव हि मता तस्याः प्रदानादहं
बन्धुर्वो भविता पुलस्त्यपुलहप्रष्ठाश्च संबन्धिनः ॥१२५॥'

विषयगुणेन पटुप्रत्ययादुत्पन्नः पटुर्यथा—

'उत्पत्तिर्देवयजनाद्ब्रह्मवादी नृपः पिता ।
सुप्रसन्नोज्ज्वला मूर्तिरस्याः[5] स्नेहं करोति मे ॥ १२६ ॥'

---

१. 'मण्डनेन' ग. २. 'इति' इत्यधिकं ख. ३. 'आदरादुत्पन्न' क.ख. ४. 'चेत्क्व-चिदस्ति' मुद्रितमहावीरचरिते. ५. 'मूर्तिरस्यां स्नेह' मुद्रितमहावीरचरिते.

ज्ञानपौनःपुन्येनाभ्यासप्रत्ययादुत्पन्नोऽभ्यस्तः ॥

स यथा—

'भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था।
साक्षात्कामं नवमिव रतिर्मालती माधवं य-
द्गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति ॥ १२७ ॥'

अत्र यद्यपि विषयगुणात् पटुः, आश्रयगुणादाहतोऽपि प्रत्ययः, पटुमाहतं च संस्कारं प्रसूते तथाप्यभ्यासात्पटीयानाहततमश्च जायमानोऽभ्यस्त इत्युच्यते ॥

उद्दीपनविभावेषु माल्यवस्त्रविभूषणादयो माल्यादयः ॥

तेषु माल्यं यथा—

'अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम्।
मुक्ताकलापीकृतसिन्धुवारं वसन्तपुष्पाभरणं वहन्ती ॥१२८॥'

वस्त्रं यथा—

'आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम्।
सुजातपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ॥१२९॥'

विभूषणं यथा—

'कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य।
अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः १३०'

ऋतुवयोमदादय ऋत्वादयः।

---

१. 'पौनःपुन्येन' ग.घ. २. 'चाहतोऽपि' क.ख. ३. 'च' क.ख. नास्ति. ४. 'प्रसूयते' क.ख. ५. 'कर्निकारम्' ख. ६. 'स्तवकावनम्रसंचारिणी' क. ७. 'निस्तुलस्य' क. ८. 'ऋतुर्वयोमदादयः' क.ख.

तेषु ऋतुर्यथा—

'इदमसुलभवस्तु प्रार्थनादुर्निवारं
प्रथममपि मनो मे पञ्चबाणः क्षिणोति ।
किमुत मलयवातोन्मूलितापाण्डुपत्रै-
रुपवनसहकारैर्दर्शितेष्वङ्कुरेषु ॥ १३१ ॥'

वयो यथा—

'मामूमुहत्खलु भवन्तमनन्यजन्मा
मा ते मलीमसविकारघना मतिर्भूत् ।
इत्यादि नन्विह निरर्थकमेव यस्मा-
त्कामश्च जृम्भितगुणो नवयौवनं च ॥ १३२ ॥'

मदो यथा—

'तत्क्षणं विपरिवर्तितह्रियोर्नेष्[१]यतोः शयनमिद्धरागयोः ।
सा बभूव वशवर्तिनी द्व[२]योः शूलिनः सुवदना मदस्य च १३३'

चन्दनस्नानधूपादयश्चन्दनादयः ।

तेषु चन्दनं यथा—

'चन्दनं विषधराश्रयः शशी वारुणी च विषसोदरावुभौ ।
तापयन्ति विरहे किमुच्यते मारयन्ति न यदेतदद्भुतम् १३४'

स्नानं यथा—

'आअम्बलोअणाणं ओ[३]ल्लंसुअ[४]पाअडोरुजहणाणं ।
अ[५]वरह्णमज्जिरीणं कए ण कामो धणुं[६] वहइ ॥ १३५ ॥'

[आताम्रलोचनानामार्द्रांशुकप्रकटोरुजघनानाम् ।
अपराह्णमज्जनशीलानां कृते न कामो धनुर्वहति ॥]

१. 'नेक्षतोः' घ. २. 'तयोः' क.ख. ३. 'उल्लुउअ' क., 'उत्तुंसुअ' ख. ४. 'पअडो-रुजहणा' क. ५. 'अवरह्ण' क.ख. ६. 'वहइ चावं' इति काव्यमालामुद्रितगाथासप्तशत्याम्, क.ख. च.

धूपो यथा—

'स्नानार्द्रमुक्तेष्व[1]नुधूपवासं विन्यस्तसायन्तनमल्लिकेषु।
कामो वसन्तात्य[2]यमन्दवीर्यः केशेषु लेभे बलमङ्गनानाम् १३६'

चन्द्रोदयो घनध्वनिरुपकारस्मरणमित्याद्याश्चन्द्रोदयादयः।

तेषु चन्द्रोदयो यथा—

'[3]विलिम्पत्येतस्मिन्मलयजरसार्द्रेण महसा
दिशां वक्त्रं चन्द्रे सुकृतमथ तस्या मृगदृशः।
दृशोर्बाष्पः पाणौ वदनमसवः कण्ठकुहरे
हृदि त्वं ह्रीः पृष्ठे वचसि च गुणा एव भवतः॥ १३७'

घनध्वनिर्यथा—

'अज्ज मए तेण विणा अणुहू[5]असुहाइँ संमरंतीए।
[6]अहिणवमेहाणँ रवो णिसामिओ वज्झ[7]पँडहो व॥ १३८॥'
[अद्य मया तेन विनानुभूतसुखानि संस्मरन्त्या।
अभिनवमेघानां रवो निशामितो वध्यपटह इव॥]

उपकारस्मरणं यथा—

'तन्मे मनः क्षिपति यत्सरसप्रहार-
मालोक्य मामगणितस्खलदुत्तरीया।
त्रस्तैकहा[8]यनकुरङ्गविलोलदृष्टि-
राश्लिष्टवत्यमृतसंवलितैरिवाङ्गैः॥ १३९॥'

---

१. 'शुष्केषु' घ. २. 'वसन्तातप' ख. ३. 'विलिम्पन्त्येतस्मिन्' घ. ४. 'मलयरजसार्द्रेण' क.ख. ५. 'अणुभूअसुहाइं अणिसंभरन्तीए' क.ख. ६. 'अहिणवमोहणरवो' ख. ७. 'वज्झपडहोव्व' घ. ८. 'हायण' ख.

अनुभावेषु स्मरति[1] यथा—

'खणमेत्तं पि[2] ण फिट्टइ अणुदिअहं दिण्णगरुअसंतावा[3] ।
पच्छण्णपावसंकब्व[4] सामली मज्झ हिअआहि[5] ॥१४०॥'

[क्षणमात्रमपि नापगच्छत्यनुदिवसं दत्तगुरुकसंतापा ।
प्रच्छन्नपापशङ्केव श्यामलाङ्गी मम हृदयात् ॥]

वाञ्छति[6] यथा—

'एमेअ अकअउण्णा[7] अप्पत्तमणोरहा विवज्जिसं ।
जणवाओ वि ण जाओ तेण समं हलिअउत्तेण[8] ॥१४१॥'

[एवमेवाकृतपुण्याप्राप्तमनोरथा विपत्स्ये ।
जनवादोऽपि न जातस्तेन समं हलिकपुत्रेण ॥]

द्वेष्टि[9] यथा—

'गोत्तक्खलणं सोऊण पिअअमे अज्ज मामि[10] छणदिअहे[11] ।
वज्झमहिसस्स मालब्व मंडणं से ण पडिहाइ[12] ॥ १४२ ॥'

[गोत्रस्खलनं श्रुत्वा प्रियतमेऽद्य सखि क्षणदिवसे[13] ।
वध्यमहिषस्य मालेव मण्डनमस्या न प्रतिभाति ॥]

प्रयतते यथा—

'अनुगच्छन्मुनितनयां सहसा विनयेन वारितप्रसरः ।
स्वस्थानादचलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥ १४३ ॥'

---

१. 'स्मरतिर्यथा' क.ख. २. 'वि' घ. ३. 'अणुदिअहविइण्णगरुअसंतावा' गाथासप्त० 'दिण्णगुरुअसंतावा' घ. ४. 'पच्छण्णपापसंकव्व' घ., 'पच्छन्नपावसंकेव्व' गाथासप्त०. ५. 'हिअआओ' गाथासप्त०, 'हिअआहि' क.ख.ग. ६. 'वाञ्छतिर्यथा' क.ख. ७. 'अकअपुण्णा' घ. ८. 'हलिअपुत्तेण' घ. ९. 'द्वेष्टिर्यथा' क.ख. १०. 'तीअ' गाथासप्त०. ११. 'खणदिअहे' इति तत्रैव. १२. 'उअह' पश्यत इत्यपि च. १३. उत्सवदिवसे.

अवैति[1] यथा—

'चन्दसरिसं मुहं से सरिसो अमअस्स मुहरसो तिस्सा।
सकअग्गहरहसुज्जलचुंबणअं कस्स सरिसं से ॥१४४॥'

[चन्द्रसदृशं मुखमस्याः सदृशोऽमृतस्य मुखरसस्तस्याः।
सकचग्रहरभसोज्ज्वलचुम्बनकं कस्य सदृशमस्याः॥]

मन्यते यथा—

'परिवट्टंतिव[2] णिसंस(म)इ मंडलिअकुसुमाउहं व अणंगं।
विरहम्मि मण्णइ हरीणहे[3] अणत्थपडिउट्ठिअं[3] व मिअंकम्॥१४५'

[परिवर्तमानेव(?) निशाम्यते मण्डलितकुसुमायुधमिवानङ्गम्।
विरहे मन्यते हारिनखे अनर्थप्रत्युत्थितमिव मृगाङ्कम्॥]

वक्ति यथा—

'आलाओ मा दिज्जउ लोअविरुद्धत्ति णाम काऊण।
समुहावडिए को वेरिए वि दिट्ठिं ण पाडेइ॥ १४६ ॥'

[आलापो मा दीयतां लोकविरुद्ध इति नाम कृत्वा।
संमुखापतिते को वैरिण्यपि दृष्टिं न पातयति॥]

चेष्टते यथा—

'अज्ज मए गंतव्वं घणंधआरे वि तस्स सुहअस्स।
अज्जा णिमीलिअच्छी पअपरिवाडिं घरे कुणइ॥ १४७ ॥'

[अद्य मया गन्तव्यं घनान्धकारेऽपि तस्य सुभगस्य।
आर्या निमीलिताक्षी पदपरिपाटीं गृहे करोति॥]

---

१. 'अवैतिर्यथा' क.ख. २. 'परिवट्टं दिव' क., 'परिवट्टदिवं' ख. ३. 'हरिणहे अणत्थे' क., 'हरीणाहे' 'अणत्थे' ख.

संचारिषु स्वेदरोमाञ्चवेपथवो यथा—

'दिट्ठे जं पुलइज्जसि थेरहरसि[1] पिअम्मि जं समासण्णे ।
तुह संभासणसे[2]उल्लिफंसणे किं वि [3]णिज्जिहिसि ॥ १४८ ॥'

[दृष्टे यत्पुलकायसे थरहरायसे प्रिये यत्समासन्ने ।
तव संभाषणस्वेदार्द्रीकृतस्पर्शे किमपि नीयसे ॥]

अश्रु यथा—

'[4]णअणब्भंतरघोलंतबाहभरमंथराइ[5] दिट्ठीए ।
पुणरुत्तपे[6]च्छिरीए वालअ किं जं ण भणिओ सि ॥ १४९ ॥'

[नयनाभ्यन्तरघूर्णमानबाष्पभरमन्थरया दृष्ट्या ।
पुनरुक्तप्रेक्षणशीलया बालक किं यन्न भणितोऽसि ॥]

हर्षो यथा—

'सव्वस्सम्मि विदद्धे[7](ड्ढे) तह वि हु हिअअस्स णिव्वुदि च्चेअ ।
जं तेण गामडाहे हत्थाहत्थिं कुडो गहिओ ॥ १५० ॥'

[सर्वस्वेऽपि दग्धे तथापि खलु हृदयस्य निर्वृतिरेव ।
यत्तेन ग्रामदाहे हस्ताहस्ति कुण्डो गृहीतः ॥]

अमर्षो यथा—

'कत्तो संपडइ मह[8] पि पिअसहि पिअसंगमो पओसे वि ।
जं जिअज[9]इ गहिअक[10]रणिअर खिंखिरी[11] चंदचंडालो' ॥

[कुतः संपतति ममापि प्रियसखि प्रियसंगमः प्रदोषेऽपि ।
यज्जीवति गृहीतकरनिकरखिंखिरी चन्द्रचण्डालः ॥]

---

१. 'रहघरसि' क.ख. २. 'सेओलि' क., 'सेओल्लि' ख. ३. 'णिज्जिहसि' क.ख. ४. 'णअणब्भंतर' क.ख., 'णअणंतर' ग.घ. ५. 'मन्थराए' क.ख.ग.घ. ६. 'पेच्छरीए' क.ख. ७. 'विदड्ढे' क.ख. ८. 'महम्पि' क., 'मई' ख. ९. 'अइ' घ. १०. 'कूर' क.ख. ११. शरनिर्मितवाद्यविशेषः. 'खिक्खिरी डुम्बच्चिन्धलट्ठीए' इति देशीनाममाला. डुम्बादीनां स्पर्शपरिहारार्थं चिह्नयष्टिः.

लीलादिषु प्रियजनचेष्टानुकृतिर्लीला यथा—

'जं जं करेसि जं जं जप्पसि जं[1] जं णिअच्छेसि ।
तं तमणुसिक्खरीए[2] दीहो दिअहो ण संपडइ ॥ १५२ ॥'

[यद्यत्करोषि यद्यज्जल्पसि यद्यन्निरीक्षसे ।
तत्तदनुशिक्षणशीलाया दीर्घो दिवसो न संपद्यते ॥]

नेत्रभ्रूवक्रकर्मणां विशेषणे लसनं विलासो यथा—

'सभ्रूविलासमथ सोऽयमितीरयित्वा
सप्रत्यभिज्ञमिव मामवलोक्य तस्याः ।
अन्योन्यभावचतुरेण सखीजनेन
मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः ॥ १५३ ॥'

विभूषणादीनामनादरविन्यासो विच्छित्तिर्यथा—

'अङ्गानि चन्दनरजःपरिधूसराणि
ताम्बूलरागसुलभोऽधरपल्लवश्च ।
अच्छाञ्जने च नयने वसनं तनीयः
कान्तासु भूषणमिदं विभवश्च शेषः ॥ १५४ ॥'

विभूषणादीनामस्थानप्रयोगो विभ्रमो यथा—

'चकार काचित्सितचन्दनाङ्के
काञ्चीकलापं स्तनभारपृष्ठे ।
प्रियं प्रति प्रेषितचित्तवृत्ति-
र्नितम्बबिम्बे च बभार[3] हारम् ॥ १५५ ॥'

---

१ 'जह तुम' काव्यमालामुद्रितगाथासप्त०. २. 'शिक्खिरीए' ख., 'सिक्खिरीए' इत्यपि गाथासप्त०. ३. 'बबन्ध' ग.घ.

स्मितरुदितहसितादीनां हर्षादसकृदेकीकरणं किलकिञ्चितं यथा—

'पाणिपल्लवविधूननमन्तःसीत्कृतानि नयनार्धनिमेषाः[1] ।
योषितां रहसि गद्गदवाचामस्त्रतामुपययुर्मदनस्य ॥ १५६ ॥'

इष्टजनकथायां तद्भावभावनोत्थितविकारो मोट्टायितं यथा—

'तव सा कथासु परिघट्टयति श्रवणं यदङ्गुलिमुखेन मुहुः ।
घनतां ध्रुवं नयति तेन भवद्गुणपूगपूरितमतृप्ततया ॥१५७॥'

केशस्तनाधरादिग्रहणाद्दुःखेऽपि सुखबुद्धिचेष्टा कुट्टमितं यथा—

'ह्रीभरादवनतं परिरम्भे रागवानवटुजेष्ववकृष्य ।
अर्पितोष्ठदलमाननपद्मं योषितो मुकुलिताक्षमधासीत् ॥१५८॥'

अभीष्टप्राप्तावभिमानगर्वसंभावनानादरकृतो विकारो विब्बोको[2] यथा—

'निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा ।
शैलराजतनया समीपगामाललाप विजयामहेतुकम् ॥ १५९ ॥'

सुकुमारतया करचरणाङ्गन्यासो ललितं यथा—

'गुरुतरकलनूपुरानुनादं[3][4] सललितनर्तितवामपादपद्मा ।
इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम १६०'

वक्तव्यसमयेऽपि वचसाभिभाष्य क्रियानुष्ठानं विहृतं यथा—

'पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥१६१॥'

बाल्यकौमारयौवनसाधारणो विहारविशेषः क्रीडितं यथा—

'मन्दाकिनीसैकतवेदिकाभिः
सा कन्दुकैः कृत्रिमपुत्रकैश्च ।

---

१. 'घनरोमविभेदाः' ग. २. 'बिच्छोको' घ. ३. 'नूपुरानुरावं' ख. ४. 'नुरावं' क.ख.

रेमे मुहुर्मध्यगता सखीनां
क्रीडारसं निर्विशतीव बाल्ये ॥ १६२ ॥'

क्रीडितमेव प्रियतमविषये केलिर्यथा—

'व्यपोहितं लोचनतो मुखानिलै-
रपारयन्तं किल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मनाः
प्रियं जघानोन्नतपीवरस्तनी ॥ १६३ ॥'

हेलादिषु रागतः सहसा प्रवृत्तिहेतुश्चित्तोल्लासो हेला । सा स्त्रियां यथा—

'रेहइ पिअपरिरम्भणपसारिअं सुरअमंदिरद्दारे ।
हेलाहलहलिअथोरथणहरं भुअलआजुअलं ॥ १६४ ॥'

[राजते प्रियपरिरम्भणप्रसारितं सुरतमन्दिरद्वारे ।
वेगकौतुकितस्थूलस्तनभरं भुजलतायुगलम् ॥]

सैव पुरुषे यथा—

'उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकवरीभारमंसे वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ १६५॥'

हेलैव सवचनविन्यासो हावः । स स्त्रियां यथा—

'जइ ण छिवसि पुप्फवइं पुरओ ता कीस वारिओ ठासि ।
छित्तोसि चुलुचुलन्तेहिँ पहाविऊण मह हत्थेहिं ॥ १६६ ॥'

[यदि न स्पृशसि पुष्पवतीं पुरतस्तत्किं वारितस्तिष्ठसि ।
स्पृष्टोऽसि चुलुचुलायमानैः धावित्वास्माकं हस्ताभ्याम् ॥]

---

१. 'प्रियतमविषयं' घ. २. 'जवे हेला' देशीनाममाला., 'तुमुतम्मि कोउए हल-हल' इत्यपि. ३. 'की सो' ख. ४. 'धाविउण अम्ह' इति मुद्रितगाथासप्त०, 'पहा-विऊणाम्भहत्थेहिं' ग.घ.

स एव पुरुषे यथा—

'लोओ जूरइ[2] जूरउ[3] वअणिज्जं होइ होउ तं णाम ।
एहि णिमज्जसु[1] पासे पुप्फवइ ण एइ मे णिद्दा ॥ १६७ ॥'

[लोकः खिद्यते खिद्यतु वचनीयं भवति भवतु तन्नाम ।
एहि निमज्ज पार्श्वे पुष्पवति नैति मे निद्रा ॥]

आदिग्रहणेन भावादयो गृह्यन्ते । तेषु भावाः स्त्रियां यथा—

'तावच्चिअ रइसमए महिलाणं विब्भमा विराअंति ।
जाव ण कुवलअदलसच्छहाइँ[4] मउलेंति णअणाइं ॥१६८॥'

[तावदेव रतिसमये महिलानां विभ्रमा विराजन्ते ।
यावन्न कुवलयदलसच्छायानि मुकुलीभवन्ति नयनानि ॥]

व्याजः पुंसो यथा—

'अलिअपसुत्तविणिमीलिअच्छ दे सुहअ मज्झ ओआसं ।
गंडपरिउंबणापुलइअंग ण पुणो चिराइस्सं ॥ १६९ ॥'

[[5]अलीकप्रसुप्तविनिमीलिताक्ष हे सुभग ममावकाशम् ।
गण्डपरिचुम्बनापुलकिताङ्ग न पुनश्चिरयिष्यामि ॥]

विस्रम्भभाषणं स्त्रिया यथा—

'जाओ सो वि विलक्खो मए वि हसिऊण गाढमुवगूढो ।
पढमोसरिअस्स णिअंसणस्स गंठिं विमग्गन्तो ॥ १७० ॥'

[जातः सोऽपि विलक्षो मयापि हसित्वा गाढमुपगूढः ।
[6]प्रथमापसृतस्य निवसनस्य ग्रन्थिं विमार्गयमाणः ॥]

---

१. 'णिमज्जसु' मुद्रितगाथासप्त०. २. 'णिसिज्जसु' क.ख., 'णिसज्जसु' ग.घ. ३. 'झूरइ' क. 'झूरउ' ख. ४. 'सच्छाहाइँ' ख. ५. 'देहीति शेषः । देसु धअ मज्झ' क्वचित्. अत्र हे धव, ममावकाशं देहीति योज्यम् ।' केचित्तु 'देसु हअमज्झ' इति पदच्छेदः हतमध्य अङ्कविन्यासरुद्धमध्य=देहि अवकाशम् अर्थान्मम इत्याहुः' इति गाथासप्तशत्या व्याख्याता गङ्गाधरभट्ट इति गा. स. व्याख्याता. ६. 'प्रथमेत्यनुरागातिशयेन प्रियस्पर्शात्पूर्वमेव स्खलितस्य वसनस्य ग्रन्थिम्'.

चाटु स्त्रीपुंसयोर्यथा—

'एक्कं पहँरुविण्णं हत्थं मुहमारुण्णं एण वीअंतो ।
सो वि हसंतीएँ मए गहिओ बीएण कंठम्मि ॥ १७१ ॥'
[एकं प्रहारोद्विग्नं हस्तं मुखमारुतेन बीजयन् ।
सोऽपि हसन्त्या मया गृहीतो द्वितीयेन कण्ठे ॥]

प्रेमाभिसंधानं पुंसो यथा—

'केलीगोत्तक्खलणे वरस्स पप्फुल्लइं दिहिं देहि ।
बहुवासअवासहरे बहुए वाहोल्लिआ दिट्ठी ॥ १७२ ॥'
[केलीगोत्रस्खलने वरस्य प्रफुल्लां धृतिं दधाति ।
बहुवासकवासगृहे वध्वा बाष्पार्दिता दृष्टिः ॥]

परिहासः स्त्रियां(या) यथा—

'अइ दिअर किं ण पेच्छसि आआसं किं मुहा पलोएसि ।
जाआइ बाहुमूलं मि अद्धअन्दाणँ पडिवाडिं ॥ १७३ ॥'
[अयि देवर किं न प्रेक्षस आकाशं किं मुधा प्रलोकयसि ।
जायाया बाहुमूलेऽर्धचन्द्राणां परिपाटीम् ॥]

कुतूहलं पुंसो यथा—

'असमत्तमंडणच्चिअ वच्च घरं से सकोउहल्लस्स ।
वोलाविअहँलहलस्सअ[अस्स]पुत्ति चित्ते ण लँग्गिहिसि ॥'
[असमाप्तमण्डनैव व्रज गृहं तस्य सकौतूहलस्य ।
व्यतिक्रान्तौत्सुक्यस्य पुत्रि चित्ते न लगिष्यसि ॥]

१. 'रुव्वाणं' क. २. 'दिच्छी' ग.घ. ३. 'अद्धअन्दाण' क.ख.ग. ४. 'असमत्तमडणा विअ' मुद्रितगाथासप्त०, 'मंडणं विअ' क. ५. 'कोउद हलहलहलम्' देशी नाममाला, गाथासप्तशत्यनुसारं च 'हलहलअस्य' पाठः. 'हलहलकं कामौत्सुक्यमिति देशी' कुलबालदेवः. अत्र द्रष्टव्या श्रीपितृचरणानां टिप्पणी. ६. 'लग्गिहसि' क.

चकितं स्त्रिया यथा—

'णवलइ पहारतुट्ठाइं तं कअं किं पि हलिअसोण्हाए ।
जं अज्ज वि जुअइजणो घरे घरे सिक्खिउं भमइ ॥१७५॥'

[पतिनामप्रश्नपूर्वकप्रहारतुष्टया तत्कृतं किमपि हालिकस्नुषया ।
यदद्यापि युवतिजनो गृहे गृहे शिक्षितुं भ्रमति ॥]

**हेला हावश्च भावश्च व्याजो विस्रम्भभाषणम् ।**
**चाटु प्रेमाभिसंधानं परिहासः कुतूहलम् ॥ १६८ ॥**
**चकितं चेति निर्दिष्टाश्चेष्टाः काश्चिद्विलासिनाम् ।**
**शेषाणां विप्रलम्भादौ रूपमाविर्भविष्यति ॥ १६९ ॥**

तत्र नायकयोः प्रागसंगतयोः, संगतयोश्च, संगतवियुक्तयोर्वा, मिथो दर्शनश्रवणाभ्यामवस्थिताभिमानजन्मा परस्परानुरागोऽन्यतरानुरागो वाभिलषणीयालिङ्गनादीनामनवाप्तौ सत्यां समुपजायमानैस्तैस्तैरुत्कण्ठादिभिर्व्यभिचारिभावैर्मनोवाग्बुद्धिशरीरारम्भजन्मभिश्चानुभावैरनुबद्धः प्राप्तप्राप्यप्रकर्षावस्थो विप्रलम्भशृङ्गाराख्यां लभते । स चतुर्धा—पूर्वानुरागो, मानः, प्रवासः, करुणश्च ॥

तेषु प्रागसंगतयोः पूर्वानुरागः पुरुषप्रकाण्डे यथा—

'दूरं मुक्तालतया बिससितया विप्रलोभ्यमानो मे ।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः ॥ १७६ ॥'

अत्र पुण्डरीकस्य महाश्वेतायां प्रागसंगतायां समुत्पन्नः संकल्परमणीयोऽभिलाषस्तदनाप्तावुक्तप्रकारेण प्रकृष्यमाणस्त्वया मे मानसजन्मा दूरं नीत इत्युत्तरकामावस्थया प्रकाश्यते ॥

---

१. 'णवलइआपाहरं' क. दोलाविलाससमये 'जत्थ पलासलयाए जणेहि पइणाम पुच्छिआ जुवई । अकहन्ती णिहणिज्जइ णिअमविसेसो णवलया सा ॥' देशीनाममाला. २. 'तुट्ठाए' क.ख. ३. 'भावश्च हावश्च' ख. ४. 'स' ख.

स एव स्त्रीप्रकाण्डे यथा—

'दुल्लहजणाणुराओ लज्जा गरुई परवसो अप्पा ।
पिअसहि विसमं पेम्मं मरणं सरणं णवरि[1] एक्कं ॥ १७७ ॥'

[दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा ।
प्रियसखि विषमं प्रेम मरणं शरणमनन्तरमेकम् ॥]

अत्रापि प्राग्वदेव सागरिकाया वत्सराजेऽनुरागः प्रकृष्यमाणो मरणं शरणमित्युत्तरयैव कामावस्थया कथ्यते ॥

संगतयोर्मानः स निर्हेतुर्यथा—

'अत्थक्क[2]रूसणं खणपसिज्जणं अलिअवअणणिब्बन्धो ।
उम्म[3]च्छरसंतावो पुत्तअ पअवी सिणेहस्स ॥ १७८ ॥'

[अकस्माद्रोषणं क्षणप्रसादनमलीकवचननिर्बन्धः ।
उन्मत्सरसंतापः पुत्रक पदवी स्नेहस्य ॥]

अत्र प्रेमगतेः स्वभावकौटिल्याद्धेतुमन्तरेणोपजायमानो निर्हेतुरुच्यते

स एव सहेतुर्यथा—

'पडिउ[4]च्छिआ ण जंपइ गहिआ वि प्फुरइ चुम्बिआ रुसइ ।
तुण्हिक्का[5] णवबहुआ क[6]आवराहेण दइएण ॥ १७९ ॥'

[परिपृष्टा न जल्पति गृहीतापि स्फुरति चुम्बिता रुष्यति ।
तूष्णींभूता नववधूका कृतापराधेन दयितेन ॥]

अत्र यद्यप्यालिङ्गनादेर्नेति नेत्यादेः प्रतिषेधो न विद्यते तथापि तदर्थोऽस्त्येवेति मानलक्षणं घटते ॥

---

१. मुद्रितरत्नावल्यां तु 'ण वारकं' पाठः, 'न पारक्यम्' छाया च. 'ना अरिणव-न्तर्ये' देशीनाममालायाष्टीकायाम्. २. अत्थक्केत्याकस्मिकेऽद्भुते वा देशी. ३. उन्मत्त-रेति बहुले. 'उन्मूर्च्छनं प्रतिकूलवाचा प्रकोपनम्' इति प्राचीनटीका गङ्गाधरभट्टोट्टङ्किता. ४. 'पडिउत्थिआ' क.ख. ५. 'तुण्हिभूआ' क.ख. ६. 'कआवराएग' घ.

संगतवियुक्तयोः प्रवासः । स नवानुरागो यथा—

'प्रियमाधवे किमसि मय्यवत्सला
　ननु सोऽहमेव यमनन्दयत्पुरा ।
अयमागृहीतकमनीयकङ्कणः
　सखि मूर्तिमानिव महोत्सवः करः ॥ १८० ॥'

अत्र विवाहानन्तरमेव मालत्याः कपालकुण्डलयापहारान्माधवमालत्योरयं नवानुरागः प्रवास उच्यते ॥

स एव प्रौढानुरागो यथा—

'त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
　मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
　क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥ १८१ ॥'

अत्र प्राचीनप्रणयप्रसादनाभिरनुरागस्य प्रौढिरवगम्यते ॥

संगतयोरेवान्यतरव्यपाये करुणः । स स्त्रीव्यपाये पुरुषस्य यथा—

'ध्रुवमस्मि शठः शुचिस्मिते कलितः कैतववत्सलस्त्वया ।
परलोकमसंनिवृत्तये यदनामन्त्र्य गतासि मामितः ॥ १८२ ॥'

अत्रेन्दुमतीव्यपायादजस्य दुःखातिशयः करुण उच्यते ॥

स एव पुरुषस्य व्यपाये स्त्रिया यथा—

'हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥ १८३ ॥'

अत्रानङ्गविषये रतेः शोकप्रकर्षः करुण इत्याख्यायते ॥

---

१. 'स्वयमागृहीत' इति Dr. R. G. Bhandarkar संपादिते मालतीमाधवे. २. 'तव' क.घ. मुद्रिते च 'विदितः कैतववत्सलस्तव'. ३. 'यदनापृच्छ्य' इति मुद्रितरघुवंशे. ४. 'शोकप्रकर्षात्' क.ख.

हीनपात्रादिषु[1] चैतदाभासा भवन्ति । तत्र हीनपात्रेषु पुंसि प्रेमानुरागो यथा—

'कअलीगब्भसरिच्छे ऊरू दट्ठूण हलिअसोण्हाए ।
उल्ललइ णहरंजणं चंदिलस्स[2] सेउल्लिअकरस्स ॥ १८४ ॥'

[कदलीगर्भसदृक्षे ऊरू दृष्ट्वा हालिकस्नुषायाः ।
आर्द्रीभवति नखरञ्जनं नापितस्य स्वेदार्दितकरस्य ॥]

अत्रैव स्त्रियां मानो यथा—

'पढमघरिणीअ समअं उअ[3] पिंडारे[4] दरं कुणन्तम्मि ।
णवबहुआइ सरोसं सव्व च्चिअ वच्छला मुक्का ॥ १८५ ॥'

[प्रथमगृहिण्या समकं पश्याभीरे भयं कुर्वति ।
नववध्वा सरोषं सर्वेऽपि च वत्सका मुक्ताः ॥]

तिर्यक्षु पक्षिणि प्रवासो यथा—

'आपृच्छामि व्यथयति मनो दुर्बला वासरश्री-
रेह्यालिङ्ग क्षपय रजनीमेकिका चक्रवाकि ।
नान्यासक्तो न खलु कुपितो नानुरागच्युतो वा
दैवाधीनः सपदि भवतीमस्वतन्त्रस्त्यजामि ॥ १८६ ॥'

अत्रैव करिणि करुणो[5] यथा—

'नान्तर्वर्तयति ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितं
नासन्नात्सरसः करोति कवलानावर्जितैः शैवलैः ।
दानज्यानिविषण्णमूकमधुपव्यासङ्गदीनाननो
नूनं प्राणसमावियोगविधुरः[6] स्तम्बेरमस्ताम्यति ॥ १८७ ॥'

अथ संभोगः । तत्र नायकयोः प्रागसंगतयोः संगतवियुक्तयोर्वा

---

१. 'हीनपात्रेषु' घ. २. चन्दिलो नापितः, चण्डिल इति तु संस्कृतसममिति देशीनाममालाव्याख्या. ३. 'तुह' क., 'तुअ' ख. ४. 'पिण्डारं' ख. ५. 'करिणी-करुणो' क.ख. ६. 'विधुरस्तम्बेरमः' ग.ख.घ.

मिथः समागमे प्रागुत्पन्नस्तदानींतनो वा रत्याख्यः स्थायिभावोऽभिलषणीयालिङ्गनादीनामवाप्तौ सत्यां समुपजायमानैर्हर्ष-धृति-स्मृति-मतिप्रभृतिभिर्व्यभिचारिभावैः संसृज्यमानः, ऋतूद्यानोपगमजलक्रीडापर्वतोपदेशप्रसाधनगृह[1]मधुपानेन्दूदयादिभिरुद्दीपनविभावैरुद्दीप्यमानः, सविभ्रमभ्रूकटाक्षविक्षेपालापसंभ्रमसितादिभिरनुभावैरभिव्यज्यमान ईप्सितमासादयन्, जिहासितं वा जिहानः, प्राप्तमाप्यप्रकर्षारम्भः संभोगशृङ्गाराख्यां लभते । स चतुर्धा—प्रथमानुरागानन्तरः, मानानन्तरः, प्रवासानन्तरः, करुणानन्तर इति ॥

तेषु प्रथमानुरागान्तरो यथा—

'पाणिग्गहणे[2] च्चिअ पव्वईअ णाअं सहीहिं सोहग्गम् ।
पसुवइणा वासुइकंकणम्मि ओसारिए दूरम् ॥ १८८ ॥'

[पाणिग्रहण एव पार्वत्या ज्ञातं सखीभिः सौभाग्यम् ।
पशुपतिना वासुकिकङ्कणेऽपसारिते दूरम् ॥]

मानान्तरो यथा—

'उव्वहइ दइअगहिआहरोट्ठझिज्जन्तरोसपडिराअम् ।
पाणोसरन्तमइरं चसअं[3] व णिअं मुहं बाला ॥ १८९ ॥'

[उद्वहति दयितगृहीताधरौष्ठक्षीयमाणरोषप्रतिरागम् ।
पानापसरन्मदिरं चषकमिव निजं मुखं बाला ॥]

प्रवासानन्तरो यथा—

'मंगलवलअं जीअं व रक्खिअं जं पउत्थवइआइ[4] ।
पत्तपिअदंसणूससिअबाहुलइआइं तं[5] भिण्णम् ॥ १९० ॥'

[मङ्गलवलयं जीवितमिव रक्षितं यत्प्रोषितपतिकया ।
प्राप्तप्रियदर्शनोच्छ्वसितबाहुलतिकायां तद्भिन्नम् ॥]

---

१. 'प्रसाधनग्रह' ग. घ. २. 'पाणिग्गहणे व्विअ पव्वइएँ' गाथासप्त० 'पाणिग्गहणव्विअ' घ. ३. गौडवहोनाम्नि वाक्पतिविरचिते प्राकृतकाव्ये 'फलियचसयं इमा वयणं' पाठः, 'स्फटिकचषकमेषा वदनम्' इति छाया च. ४. 'चपज्झिअवइआए' क. ख. ५. 'तं भीए' ख.

करुणानन्तरो यथा—

'ण मुअम्मि[1] मुए वि पिए दिट्ठो उण पिअअमो जिअंतीए।
इअ लज्जा अ पहरिसो[2] तीए हिअए ण संमाइ ॥ १९१ ॥'

[न मृतास्मि मृतेऽपि प्रिये दृष्टः पुनः प्रियतमो जीवन्त्या।
इति लज्जा च प्रहर्षस्तस्या हृदये न समाति ॥]

तेऽमी चत्वारोऽपि संभोगाश्चतुर्भिरेव विप्रलम्भैः प्रकर्षमापद्यन्ते ॥

तेषु प्रथमानुरागेण यथा—

'इन्दुर्यत्र न निन्द्यते न मधुरं दूतीवचः श्रूयते
नोच्छ्वासा[3] हृदयं दहन्त्यशिशिरा नोपैति कार्श्यं वपुः।
स्वाधीनामनुकूलिनीं स्वगृहिणीमालिङ्ग्य यत्सुप्यते
तत्किं प्रेम गृहाश्रमव्रतमिदं कष्टं समाचर्यते ॥ १९२ ॥'

मानेन यथा—

'रइविग्गहम्मि[4] कुण्ठीकआओ धाराओ पेम्मखग्गस्स।
अणमआइं व्व सिज्झन्ति माणसाइं णाइ[5] मिहुणाणम् १९३'

[रतिविग्रहे कुण्ठीकृता धाराः प्रेमखड्गस्य।
अन्नमयानीव स्विद्यन्ति मानसानि ज्ञायन्ते मिथुनानाम् ॥]

प्रवासेन यथा—

'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानेतान् गमय चतुरो लोचने मीलयित्वा।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं[6]
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ १९४ ॥'

---

१. 'मुअम्हि' ख. २. 'परिहासो' क., 'पहारिहासो' च. ख. ३. 'नालपाः निपतन्ति बाष्पकलुषा'. ४ 'रहविग्गाहम्मि' ख. ५. 'णाइं' ख. ६.'आत्माभियोगं' क.

करुणेन यथा—

'न मर्त्यलोकस्त्रिदिवात्प्रहीयते म्रियेत नाम्रे यदि वल्लभो जनः ।
निवृत्तमेव त्रिदिवप्रयोजनं मृतः स चेज्जीवत एव जीवति १९५'

तिर्यगादिषु चैतदाभासा भवन्ति ॥

तेषु सरीसृपमृगयोर्यथा—

'मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण संस्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः १९६'

पशुपक्षिणोर्यथा—

'ददौ सरःपङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।
अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥ १९७ ॥'

किंनरेषु यथा—

'गीतान्तरेषु श्रमवारिलेशैः किंचित्समुच्छ्वासितपत्रलेखम् ।
पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किंपुरुषश्चुचुम्बे ॥ १९८ ॥'

तरुषु यथा—

'पर्याप्तपुष्पस्तबकस्तनीभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥१९९॥'

विप्रलम्भचेष्टासु प्रथमानुरागे स्त्रिया यथा—

'पेच्छइ अलद्धलक्खं दीहं णीससइ सुण्णअं हसइ ।
जइ जंपइ अफुडत्थं तह से हिअअट्ठिअं किं वि ॥२००॥'

[प्रेक्षतेऽलब्धलक्ष्यं दीर्घं निःश्वसिति शून्यं हसति ।
यथा जल्पत्यस्फुटार्थं तथास्या हृदयस्थितं किमपि ॥]

१. 'श्चित्समुच्छ्वासितपत्रलेखम्' घ. २. 'प्रवालौष्ठमनोहरास्यः' घ. ३. 'अलद्ध-लक्खदीहं' क.ख.

पुंसो यथा—

'सो तुह[1] कएण सुंदरि तह [2]झीणो सुमहिलो हलिअउत्तो।
जह से मच्छरिणीअ वि दोच्चं जाआए पडिवण्णम् २०१'

[स तव कृतेन सुन्दरि तथा क्षीणः सुमहिलो हालिकपुत्रः।
यथास्य मत्सरिण्यापि दौत्यं जायया प्रतिपन्नम्॥]

माने स्त्रिया यथा—

'कण्णु[3]ज्जुआ वराई सा अज्ज तए कआवराहेण।
ज[4]भाइअरुक्खपलोअइआइं दिअहेण सिक्खवि[5]आ॥२०२॥'

[कर्णर्जुका वराकी साद्य त्वया कृतापराधेन।
जृम्भायितरूक्षप्रलोकितानि दिवसेन शिक्षिता॥]

पुंसो यथा—

'अविभाविअरअणिमुहं तस्स अ सच्चरिअविमलचन्दुज्जोअम्।
जाअं पिआविरोहे वढंताणुअमूढलक्खं हिअअम्॥ २०३॥'

[अविभावितरजनीमुखं तस्याश्च सच्चरितविमलचन्द्रोद्द्योतम्।
जातं प्रियाविरोधे वर्धमानानुशयमूढलक्ष्यं हृदयम्॥]

प्रवासे स्त्रिया यथा—

'पियसंभरणपलो[6]ट्टंतवाहधाराणि[7]वाअभीआए।
दि[8]ज्जइ वंकग्गीवाई दीवओ पहिअजाआए॥ २०४॥'

[प्रियसंस्मरणप्रलुठद्बाष्पधारानिपातभीतया।
दीयते वक्रग्रीवया दीपकः पथिकजायया॥]

---

१. 'तुज्झ कए सुन्दरि' का. मा. मुद्रितगाथासप्त०. २. 'झीणो' क. ख. ३. 'काण्डुज्जुआ' गाथासप्त० काण्डवदृजुका, 'कण्णुज्जुआ' इति पाठे कर्णऋजुका कर्णदुर्बलेत्यर्थ इति टीकाकृत्. 'अलसा इअ रुण्णविअम्भिआइ' गाथासप्त०. ४. 'जं भाइआ' क. ५. 'सिक्खविआ' क. ६. 'पओट्टंत' ख. ७. 'निआअ' क. ८. 'वंकग्गीवाए' गाथासप्त०.

पुंसो यथा—

'मज्झण्णपत्थिअस्स वि गिम्हे पहिअस्स हरइ संतावम् ।
हिअअट्ठिअजाआमुहमिअंकजोण्हाजलप्पवहो[1] ॥ २०५ ॥'

[मध्याह्नप्रस्थितस्यापि ग्रीष्मे पथिकस्य हरति संतापम् ।
हृदयस्थितजायामुखमृगाङ्कज्योत्स्नाजलप्रवाहः ॥]

करुणे स्त्रिया यथा—

'णवरि अ पसारिअंगी रअभरिउप्पहपइण्णवेणीबंधा ।
पडिआ उरसंदाणिअमहिअलचक्कलेइ[2]अत्थणी जणअसुआ २०६'

[अनन्तरं च प्रसारिताङ्गी रजोभरितोत्पथप्रकीर्णवेणीबन्धा ।
पतितोरःसंदानितमहीतलचक्रीकृतस्तनी जनकसुता ॥]

पुंसो यथा—

'अंतोहुत्तं[3] डज्झइ जाआसुण्णे घरे हलिअउत्तो ।
उक्खित्तणिहाणाइं व रमिअट्ठाणाइं पेच्छंतो[4] ॥ २०७ ॥'

[अन्तरभिमुखं दह्यते जायाशून्ये गृहे हालिकपुत्रः ।
उत्क्षिप्तनिधानानीव रमितस्थानानि पश्यन् ॥]

एवमन्या[5] अपि ॥

करुणवर्जं स्त्रिया यथा—

'सौधादुद्विजते त्यजत्युपवनं द्वेष्टि प्रभामैन्दवीं
द्वारात्त्रस्यति चित्रकेलिसदसो[6] वेषं विषं मन्यते ।
आस्ते केवलमब्जिनीकिसलयप्रस्तारशय्यातले
संकल्पोपनत[7]त्वदाकृतिरसायत्तेन चित्तेन सा ॥ २०८ ॥'

---

१. 'जलप्पवाहे' क. २. 'चक्कलइ' क. ३. 'अन्तोहुत्तं' गाथासप्त०. ४. 'पेक्खन्तो' क. ५. 'एवमन्यत्रापि' क.ख. ६. 'चित्रकेलिसदने' क. ७ 'पनमस्त' क.

स्त्रिया एव प्रथमानुरागवर्जं यथा—

'तिष्ठ द्वारि भवाङ्गणे व्रज बहिः सं प्रेति वर्त्मेक्षते
शालामञ्च तमङ्गमञ्च वलभीमञ्चेति वेश्माञ्चति ।
दूतीं संदिश संदिशेति बहुशः संदिश्य सास्ते तथा
तल्पे कल्पमयीव निर्घृण यथा नान्तं निशा गच्छति २०९'

प्रथमानुरागवर्जं पुंसो यथा—

'रम्यं द्वेष्टि पुर यथा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्योपान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति स व्रीडावनम्रश्चिरम् २१०'

पुंस एव प्रवासकरुणयोर्यथा—

'सीतावेश्म यतो निरीक्ष्य हरते दृष्टिं झटित्याकुला-
मन्योन्यार्पितचञ्चुदत्तकवलैः पारावतैर्दूयते ।
इन्दोर्दूरत एव नश्यति विशत्यन्तर्गृहं दुःखितः
प्रच्छाद्याननमञ्चलेन रजनीष्वस्तत्रपं रोदिति ॥ २११ ॥'

संभोगचेष्टासु पूर्वानुरागान्तरे चुम्बनं यथा—

'आअरपणामिओट्ठं अघडिअणासं असंघडिअणिलाडम् ।
वण्णघअलिप्पमुहीअ तीअ परिउंबणं मरिमो ॥ २१२ ॥'

[आदरप्रणामितौष्ठमघटितनासमसंघटितललाटम् ।
वर्णघृतलिप्तमुख्यास्तस्याः परिचुम्बनं स्मरामः ॥]

---

१. 'स प्रेति' ख. २. 'च' क. मुद्रितेऽभिज्ञानशाकुन्तले च. ३. 'भूयते' क. ख. ४. 'असंघुलिअ' क. 'असंवलिअ' ख. ५. 'वण्णघअलुप्पमुहीए तीए' क. 'वणवअलुप्पमुहीऍ तीऍ' ख.

अत्रैवालिङ्गनं यथा—

'तावमवणेइ ण तहा चंदणपंको वि कामिमिहुणाणम् ।
जह दूसहे वि गिम्हे अण्णोण्णालिंगणसुहेल्ली ॥ २१३ ॥'

[तापमपनयति न तथा चन्दनपङ्कोऽपि कामिमिथुनानाम् ।
यथा दुःसहेऽपि ग्रीष्मेऽन्योन्यालिङ्गनसुखम् ॥]

मानानन्तरे चुम्बनं यथा—

'जह जह से परिउंबइ मण्णुभरिआइं णिहुवणे दइओ ।
अच्छीइं उवरि उवरि तह तह भिण्णाइं विगलंति ॥२१४॥'

[यथा यथास्याः परिचुम्बति मन्युभरितानि निधुवने दयितः ।
अक्षीण्युपर्युपरि तथा तथा भिन्नानि विगलन्ति ॥]

अत्रैवालिङ्गनं यथा—

'माणदुमपरुसपवणस्स मामि सव्वंगणिव्वुदिअरस्स ।
उवऊहणस्स भद्दं रइणाडअपुव्वरंगस्स ॥ २१५ ॥'

[मानद्रुमपरुषपवनस्य मातुलानि सर्वाङ्गनिर्वृतिकरस्य ।
उपगूहनस्य भद्रं रतिनाटकपूर्वरङ्गस्य ॥]

प्रवासानन्तरे चुम्बनं यथा—

'केनचिन्मधुरमुल्बणरागं बाष्पतप्तमधिकं विरहेषु ।
ओष्ठपल्लवमपास्य मुहूर्तं सुभ्रुवः सरसमक्षि चुचुम्बे ॥ २१६ ॥'

करुणानन्तरमालिङ्गनं यथा—

'चन्द्रापीडं सा च जग्राह कण्ठे कण्ठस्थानं जीवितं च प्रपेदे ।
तेनापूर्वां सा समुल्लासलक्ष्मीमिन्दुं स्पृष्ट्वा सिन्धुवेलेव भेजे २१७'

१. 'वि' क.ख. नास्ति. २. गाथासप्तशत्यां 'सुखकेलिः' इति च्छाया । देशीनाममालायां तु 'सुहे सुहेल्लीअ' इति, 'सुहेल्ली सुखम् सुहल्लीत्यन्ये' इति टीका च. ३. 'पडिउंबइ' ख. ४. 'मानद्रुम' घ. ५. गाथासप्त० 'अवऊहणस्स' इति, 'अवगूहनस्य' इति च्छाया च. ६. 'प्रवासानन्तरं' क.ख.

प्रथमानुरागानन्तरे दन्तक्षतं यथा—

'णासं व सा कवोले अज्ज वि तुह दंतमंडलं बाला ।
उब्भिण्णपुलअवईवेढपरिगअं रक्खइ वराई ॥ २१८ ॥'

[न्यासमिव सा कपोलेऽद्यापि तव दन्तमण्डलं बाला ।
उद्भिन्नपुलकवृतिवेष्टपरिगतं रक्षति वराकी ॥]

तदेव मानानन्तरे यथा—

'पवणुव्वेल्लिअसाहुलि ठएँसु ठिअदंतमंडले ऊरू ।
चडुआरअं पइं मा हु पुत्ति जणहासिअं कुणसु ॥ २१९ ॥'

[पवनोद्वेल्लितवस्त्राञ्चले स्थगय स्थितदण्डमण्डले ऊरू ।
चटुकारकं पतिं मा खलु पुत्रि जनहसितं कुरु ॥]

प्रवासानन्तरे दन्तक्षतादयो यथा—

'दंतक्खअं कवोले कअग्गहुव्वेल्लिओ अ धम्मिल्लो ।
परिघुम्मिरा अ दिट्ठी पिआगमं साहइ वहूए ॥ २२० ॥'

[दन्तक्षतं कपोले कचग्रहोद्वेल्लितश्च धम्मिल्लः ।
परिघूर्णनशीला च दृष्टिः प्रियागमं साधयति वध्वाः ॥]

प्रथमानुरागानन्तरे नखक्षतं यथा—

'अज्जाइ णवणहक्खअणिरिक्खणे गरुअजोव्वणुत्तुंगम् ।
पडिमागअणिअणअणुप्पलच्चिअं होइ थणवट्टम् ॥ २२१ ॥'

[आर्याया नवनखक्षतनिरीक्षणे गुरुकयौवनोत्तुङ्गम् ।
प्रतिमागतनिजनयनोत्पलार्चितं भवति स्तनपृष्ठम् ॥]

---

१. 'प्रथमरागानन्तरं दशनक्षतं' क., 'प्रथमानुरागानन्तरं दशनक्षतं' ख. २ 'परिवेढ' क.ख. ३. 'वत्थब्भुभुअसाहापिकिसरिससहीसु साहुली चेअ।' इति देशीनाममाला, 'साहुली वस्त्रं भूर्भुजः शाखा पिकी सदृशः सखी चेति सप्तार्थाः' इति तट्टीका च. ४. 'थएव सुठठिअ' क., 'त्थएवसट्टिअ' ख. ५. 'चडुआरअं मा हु पुत्ति' क., 'चडुआरअं माइ पुत्ति' ख., 'पइं' इति नास्त्येव क.ख. ६. 'जणहासणं' क. ७. 'पडिघुम्मिरा' क., 'पडिघुम्मिरा अ' ख. ८. 'प्रथमानुरागानन्तरं' क. ९. 'णव-णहक्खणिविक्खणे' ख., 'णवणहक्खअणिविरक्खणे' ख. १०. 'णअणुप्पलं' क.ख.

अत्रैव पुरुषायितं यथा—

'दरवेविरोरुजुअलासु मउलिअच्छीसु लुलिअचिउरासु[1] ।
पुरिसाइअसीरीसु[2] कामो पिआसु सज्जाउहो वसइ ॥२२२॥'

[ईषद्वेपनशीलोरुयुगलासु मुकुलिताक्षीषु लुलितचिकुरासु ।
पुरुषायितशीलासु कामः प्रियासु सज्जायुधो वसति ॥]

सर्वं सर्वत्र यथा—

'पोढमहिलाणं जं सुट्ठु सिक्खिअं तं रए सुहावेइ[3] ।
जं जं[4] असिक्खिअं णववहूणं तं तं[5] धिइं देइ ॥ २२३ ॥'

[प्रौढमहिलानां यत्सुष्ठु शिक्षितं तद्रते सुखयति ।
यद्यदशिक्षितं नववधूनां तत्तद्धृतिं ददाति ॥]

विप्रलम्भपरीष्टिष्वभियोगतः प्रेमपरीक्षा यथा—

'हंहो कण्णुल्लीणा भणामि रे सुहअ किं पि मा जूरं[6] ।
णिज्जणपारद्धीसु[7] तुए कहिं[8] वि पुण्णेहिं लद्धोसि ॥ २२४ ॥'

[हंहो कर्णोल्लीना भणामि रे सुभग किमपि मा खिद्यस्व ।
निर्जनरथ्यासु त्वं कथमपि पुण्यैर्लब्धोऽसि ॥]

प्रत्यभियोगतो यथा—

'गोलाविसमोआरच्छलेण अप्पा उरम्मि से मुक्को ।
अणुअंपाणिद्दोसं तेण वि सा गाढमुवऊढा[9] ॥ २२५ ॥'

[गोदावरीविषमावतारच्छलेनात्मा उरसि तस्य मुक्तः ।
अनुकम्पानिर्दोषं तेनापि सा गाढमुपगूढा ॥]

---

१. 'न्विहुराह्य' मुद्रितगाथासप्त० क. २. 'पुरिसाइरीसु' इति गाथासप्त०. ३. 'खए सुहावेदि' क., 'रइए सुहावेदि' ख. ४. 'जं जेण' ख. ५. 'रइं' क.ख. ६. 'मा झूर' क., 'भासुर' ख. ७. 'पारद्धीसु' ख., 'पाणद्धी रच्छाए' इति देशीनाममाला. ८. 'कहं पि' ख. ९. 'आढमुवऊढा' इति गाथासप्त०.

विषहणेन यथा—

'अज्ज वि सेअजलोल्लं पव्वाइ ण तीअ हलिअसोण्हाए ।
फग्गुच्छणचिक्खिख(क्ख)ल्लं जं तइ दिण्णं थणुच्छङ्गे ॥ २२६'

[अद्यापि स्वेदजलार्द्रितः प्रम्लायते न तस्या हालिकस्नुषायाः ।
फल्गूत्सवकर्दमो यस्तस्या दत्तः स्तनोत्सङ्गे ॥]

विमर्शेन यथा—

'तत्तो च्चिअ णेन्ति कहा विअसंति तहिं समप्पन्ति ।
किं मण्णे माउच्छा एक्कजुआणो इमो गामो ॥ २२७ ॥'

[तत एव निर्यान्ति कथा विकसन्ति तत्र तत्र समाप्यन्ते ।
किं मन्ये मातृष्वसः एकयुवकोऽयं ग्रामः ॥]

बहुमानेन यथा—

'तेण इर णवलआए दिण्णो पहरो इमीअ थणवट्ठे ।
गामतरुणीहिं अज्ज वि दिअहं परिवालिआ भमइ ॥ २२८ ॥'

[तेन किल दोलाविलासे दत्तः प्रहार एतस्याः स्तनपृष्ठे ।
ग्रामतरुणीभिरद्यापि दिवसं प्रतिपालिता भ्रमति ॥]

श्लाघया यथा—

'सा तइ सहत्थदिण्णं फग्गुच्छणकद्दमं थणुच्छंगे ।
परिकुविआ इव साहइ सलाहिरी गामतरुणीणम् ॥२२९॥'

[सा त्वया स्वहस्तदत्तं फल्गूत्सवकर्दमं स्तनोत्सङ्गे ।
परिकुपितेव साधयति श्लाघनशीला ग्रामतरुणीनाम् ॥]

---

१. 'चिक्खल्लो कद्दमए' इति देशीनाममाला. २. 'होन्ति' इति गाथासप्तशत्यां 'भवन्ति' इति तच्छाया च. ३. 'फिअसंति' क., 'किआसंति' ख. ४. 'समत्थन्ति' क., 'समत्थन्ति' ख. ५. 'विअ' घ. ६. 'सलहरी' घ.

इङ्गितेन यथा—

'जइ सो ण वल्लह[1] चिअ णामग्गहणेन तस्स सहि कीस ।
होइ मुहं ते रविअरफंसविसट्टं[2] व तामरसम् ॥ २३० ॥'

[यदि स न वल्लभ एव नामग्रहणेन तस्य सखि किमिति ।
भवति मुखं ते रविकरस्पर्शविकसितमिव तामरसम् ॥]

दूतसंप्रेषणेन यथा—

'सेउल्लिअसवंगी णामग्गहणेन[3] तस्स सुहअस्स ।
दूइं[4] अप्पाहेंती[5] तस्से अ घरंगणं पत्ता ॥ २३१ ॥'

[स्वेदार्द्रीकृतसर्वाङ्गी नामग्रहणेन तस्य सुभगस्य ।
दूतीं संदिशन्ती तस्यैव गृहाङ्गणं प्राप्ता ॥]

दूतप्रश्ने[6] यथा—

'कह णु गआ कह दिट्ठा[7] किं भणिआ किं च तेण पडिवण्णं[8] ।
एअं चिअ ण समप्पइ पुनरुत्तं जंपमाणीए[9] ॥ २३२ ॥'

[कथं नु गता कथं दृष्टा किं भणिता किं च तेन प्रतिपन्नम् ।
एवमेव न समाप्यते पुनरुक्तं जल्पमानायाः ॥]

लेखविधानेन यथा—

'वेविरसिण्णकरङ्गुलिपरिग्गहक्खलिअलेहणीमग्गे[10][11] ।
सोत्थि च्चिअ[12] ण समप्पइ पिअसहि लेहम्मि किं लिहिमो ॥ २३३ ॥'

[वेपनशीलस्विन्नकराङ्गुलिपरिग्रहस्खलितलेखनीमार्गे ।
स्वस्त्येव न समाप्यते प्रियसखि लेखे किं लिखामः ॥]

---

१.'वल्लहो व्विअ गोत्तग्गहणेण' गाथासप्त०. २.'फंसव्विसदं' गाथासप्त०, 'फंसविसद्दं' घ. ३. 'गोत्तग्गहणेन' गाथासप्त०. ४. 'डूरं'(?) क. दूतमिति भवेत्. ५. 'पट्ठाएन्ती' गाथासप्त०,'प्रस्थापयन्ती (संदिशन्ती वा)' इति च्छाया च, 'संदिट्ठं अप्पाहियम्' इति धनपालस्य 'पाइयलच्छी' इति नाममाला. ६. 'दूतप्रश्नेन' क.ख. ७. 'दिट्ठी' क. ८. 'पडिवअणं' क.ख. ९. 'जंपमाणाए' घ., १०.'वेविहिसिण्ण' क., 'वेविरिसिस' ख. ११. 'परिग्गहक्खलिह' घ., 'परिग्गहक्खसिअ' इति मुद्रितगाथासप्त०. १२.'व्विअ' गाथासप्त०.

लेखवाचनेन यथा—

'प्रीत्या स्वस्तिपदं विलोकितवती स्थानं स्तुतं तुष्टया
पश्चाज्ज्ञातमनुक्रमेण पुरतस्तत्तावकं नामकम् ।
तन्व्या संमदनिर्भरेण मनसा तद्वाचयन्त्या मुहु-
र्न प्राप्तो घनबाष्पपूरितदृशा लेखेऽपि कण्ठग्रहः ॥२३४॥'

संभोगपरीष्टिषु प्रथमानुरागानन्तरे साध्वसेन पुंसो यथा—

'लीलाइओ णिअसणे रक्खिउ तं राहिआइ थणवट्टे ।
हरिणो पढमसमागमसज्झसवसरेहिँ वेविरो हत्थो ॥ २३५ ॥'

[लीलायितो निवसने रक्षतु त्वां राधिकायाः स्तनपृष्ठे ।
हरिणः प्रथमसमागमसाध्वसप्रसरैर्वेपनशीलो हस्तः ॥]

अत्रैव दोहदेन मुग्धाया यथा—

'किं किं दे पडिहासइ सहीहिँ इअ पुच्छिआइँ मुद्धाइँ ।
पढमुल्लअदोहलिणीअ णवरि दइअं गआ दिट्ठी ॥ २३६ ॥'

[किं किं ते प्रतिभासते सखीभिरिति पृष्टाया मुग्धायाः ।
प्रथमोद्गतदोहदिन्याः केवलं दयितं गता दृष्टिः ॥]

अत्रैव प्रगल्भायाः प्रियवाक्यवर्णनेन यथा—

'हुंहुं हे भणसु पुणो ण सुअंति करेइ कालविक्खेअं ।
घरिणी हिअअसुहाइं पइणो कण्णे भणंतस्स ॥ २३७ ॥'

[हुंहुं हे भण पुनर्न स्वपन्ति करोति कालविक्षेपम् ।
गृहिणी हृदयसुखानि पत्युः कर्णे भणतः ॥]

---

१. 'श्रुतं' ख. २. 'सज्झसवरेहिँ' क. ३. 'पुच्छिआएँ मुद्धाए' गाथासप्त० क.ख. ४. 'पढमुग्गअदोहणीए' इति गाथासप्त०, 'पढमुल्लुअहलिदोणीए' क, 'पढमुल्लअ-दोहलिणीए' ख. ५. 'णवरं' गाथासप्त० ६. 'प्रियवाक्यवर्णनं यथा' क.ख. ७. 'दे भणसु' क.ख.

मानानन्तरे स्त्रियाः कैतव[1]स्मरणेन यथा—

'भरिमो से सअणपरम्मुहीअ विअलंतमाणपसराए ।
के[2]अवसुत्तुव्वत्तणथणहरपेल्लणसुहेल्लिम् ॥ २३८ ॥'

[स्मरामस्तस्याः शयनपराङ्मुख्या विगलन्मानप्रसरायाः ।
कैतवसुप्तोद्वर्तनस्तनभरप्रेरणसुखकेलिम् ॥]

स्त्रिया एव सखीवाक्यस्याक्षेपेण यथा—

'भिउडीअ[3] पुलोइस्सं णिब्भच्छि[4]स्सं परम्मुही होस्सम् ।
जं भणह तं करिस्सं सहिओ जइ तं ण पेच्छिस्सम् २३९'

[भ्रुकुट्या प्रलोकयिष्ये निर्भर्त्स्ये पराङ्मुखीभविष्यामि ।
यद्भणत तत्करिष्ये सख्यो यदि तं न प्रेक्षिष्ये ॥]

तस्या एव तदनुष्ठानविघ्नेन यथा—

'ग्रन्थिमुद्ग्रथयितुं हृदयेशे वाससः स्पृशति मानधनायाः ।
भ्रूयुगेन सपदि प्रतिपेदे रोमभिश्च सममेव विभेदः ॥२४०॥'

प्र[5]वासानन्तरं स्त्रिया यथा—

'अ[6]च्छक्कागअहिअए वहुआ दइअ[7]म्मि गुरुपुरओ ।
जू[8]रइ विअलंताणं हरिसविसट्टा[9]ण वलआणम् ॥ २४१ ॥'

[अकस्मादागतहृदये वधूका दयिते गुरुपुरतः ।
क्रुध्यति विगलद्भ्यो हर्षविकसद्भ्यो वलयेभ्यः ॥]

---

१. 'कैतवस्वप्ने यथा-' क.ख. २. 'कइअवसुत्तुव्वत्तणथणकलस' गाथासप्त०, 'कइअवसुत्तुव्वत्तणथणहर' क., 'कइअवसुत्तुव्वत्तणत्थानहर' ख. ३. 'भिउडीहिं' क.ख. ४. 'णिम्भच्छिस्सं' क. ५. 'प्रवासानन्तरे' क.ख. ६. 'अत्थक्का' क.ख. ७. 'दइअवम्मि जणपुरओ' क.ख. ७. 'ऊरइ' क.ख. ९. 'विसट्टाण' ख.

अत्रैव स्त्रीपुंसयोर्यथा—

'रमिऊण पंअम्मि गए (ओ)जाहे अवऊहिउं पडिनिवुत्तो।
अहअं पउत्थपइअव्व तक्खणं सो पवासिव्व॥ २४२॥'

[रत्वा पदमपि गतो यदोपगूहितुं प्रतिनिवृत्तः।
अहं प्रोषितपतिकेव तत्क्षणं स प्रवासीव॥]

सामान्यत एव प्रवाससाध्वसेन स्त्रिया यथा—

'होंतपहिअस्स जाआ आउच्छणजीअधारणरहस्सम्।
पुच्छन्ती भमइ घरं घरेण पिअविरहसहिरीओ॥ २४३॥'

[भविष्यत्पथिकस्य जाया आपृच्छनजीवधारणरहस्यम्।
पृच्छन्ती भ्रमति गृहं गृहेण प्रियविरहसहनशीलाः॥]

प्रवासविलम्बेन पुंसो यथा—

'एक्को वि कालसारो ण देइ गंतुं पआहिण वलन्तो।
किं उण बाहाउलिअं लोअणजुअलं मिअच्छीए॥ २४४॥'

[एकोऽपि कृष्णसारो न ददाति गन्तुं प्रदक्षिणं वलन्।
किं पुनर्बाष्पाकुलितं लोचनयुगलं मृगाक्ष्याः॥]

परिहारे स्वेदादिभिः स्त्रिया यथा—

'उल्लाअइ से अंगं ऊरू वेवन्ति कूवलो गलइ।
उच्छुच्छुलेइ हिअअं पिआअमे पुप्फवइआई॥ २४५॥'

[आर्द्रीभवत्यस्या अङ्गमूरू वेपेते जघनवसनं गलति।
उत्कम्पते हृदयं प्रियागमे पुष्पवत्याः॥]

---

१. 'पअं पि गओ' इति गाथासप्त०, 'पदमपि गतः' इति च्छाया., 'पइम्मि गए' क.ख.ग. २. 'पडिनिउत्तो' क.ख., गाथासप्त०. ३. 'पउत्थपइआव्व' इति गाथासप्त०. ४. आपृच्छनं गमनप्रश्नः प्रिये याम्यहमित्येवंरूपः। 'जीव' क.ख. ५. 'सिहिरीओ' क., 'सिहिरीआ' ख. ६. 'प्रवासविलम्बेनैव' क.ख. ७. 'वसन्तो' ख. ८. 'पिअअमाए' गाथासप्त०, 'मअच्छीए' क.ख.ग.घ. ९. 'कूवलं जघणवसणे' इति देशीनाममाला. १०. 'छुछु पले' क., 'छुच्छुरा(ए)ले' ख. ११. 'पुफुइआए' क., 'पुप्फइआइए' ख.

करुणानन्तरं पुंसो यथा—

'करस्पर्शारम्भात्पुलकितपृथूरोजकलशो
श्रमाम्भो वामार्धे वहति मदनाकूतसुभगम् ।
विभोर्वारंवारं कृतसमधिकोद्धूलनविधे-
स्तनौ भसस्नानं कथमपि समाप्तं विजयते ॥ २४६ ॥'

विप्रलम्भनिरुक्तिषु प्रथमानुरागे प्रतिश्रुत्यादानं यथा—

'किं भणिओसि ण बालअ गामणिधूआई गुरुअणसमक्खम् ।
अणिमिसवंकवलंतअआणणणअणद्धदिट्ठेहिं ॥ २४७ ॥'

[किं भणितोऽसि न बालक ग्रामणीदुहित्रा गुरुजनसमक्षम् ।
अनिमिषवक्रवलदाननयनार्धदृष्टैः ॥]

अत्र वक्रेक्षितादिभिः प्रतिश्रुत्यालिङ्गनादयो ह्रीभयादिभिर्न दीयन्ते ॥ माने विसंवादनं यथा—

'अण्णुअ णाहं कुविआ उवऊहसु किं मुहा पसाएमि ।
तुह मण्णुसमुप्पण्णेण मज्झ माणेण वि ण कज्जम् ॥ २४८ ॥'

[अज्ञ नाहं कुपिता उपगूहस्व किं मुधा प्रसादयामि ।
तव मन्युसमुत्पन्नेन मम मानेनापि न कार्यम् ॥]

अत्र मानिनी पूर्वमालिङ्गनादीन्निषिध्य पश्चादयथावत्प्रयच्छति यथा कश्चिदष्टौ शतानि प्रदास्यामीति प्रतिश्रुत्याष्टभिरधिकं शतं प्रय-

---

१. 'करस्पर्शारम्भोत्पुलकित' क.ख. २. 'समयिकोद्धूननविधेः' क.ख. ३. 'किं ण भणिओसि' गाथासप्त०, क.ख. ४. 'गामणिधूआइ' क.ख. ५. 'अणिमिसमीसीसिवलन्तवअण' गाथासप्त० 'अनिमिषमीषदीषद्वलद्वदन' च्छाया च. ६. 'वअण' क.ख. ७. 'वक्रेक्षितादिभिः' ग.घ., 'वक्तेक्षितादिभिः' ख. ८. 'उवहूअसु' क.ख., 'उवहुहसु' ग. ९. 'माणेणावि' ग. १०. 'अष्टशतम्' क.ख. ११. 'अष्टाभिः' क.ख.

च्छति न त्वष्टौ शतानीति । तदेतद्व्यलीकविप्रियादिभिरालिङ्गनादीनां निराकरणमयथावत्प्रदानत्वाद्विसंवादनमेवोच्यते ॥

प्रवासे कालहरणं यथा—

'एहिइ सो वि पउत्थो अहअं कुप्पेज्ज सो वि अणुणेज्ज ।
इअ कस्स वि फलइ मणोरहाणँ माला पिअअमम्मि ॥२४९'

[एष्यति सोऽपि प्रोषितोऽहं कुपिष्यामि सोऽप्यनुनेष्यति ।
इति कस्यापि फलति मनोरथानां माला प्रियतमे ॥]

अत्रालिङ्गनादीनां व्यक्त्यैव कालहरणप्रतीतिः ॥

करुणे प्रत्यादानं यथा—

'समसोक्खदुक्खपरिवड्ढिआणँ कालेण रूढपेम्माणं ।
मिहुणाणँ मरइ जं तं खु जिअइ इअरं मुअं होइ ॥२५०॥'

[समसौख्यदुःखपरिवर्धितयोः कालेन रूढप्रेम्णोः ।
मिथुनयोर्म्रियते यत्तत्खलु जीवतीतरन्मृतं भवति ॥]

अत्र—

'सुहृदिव प्रकटय्य सुखप्रदः प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणः प्रविशिनष्टि विधिर्मनसो रुजम् २५१'

इत्ययमर्थः संबध्यते । तस्य च प्रत्यादानमेवार्थो भवति ॥

---

१. 'विप्रयोगादिभिः' क.ख. २. 'एहइ' गाथासप्त०. ३. 'वि' क.ख. ४. 'अहं अ' गाथासप्त०. 'अहं च' इति च्छाया च. ५. 'वि' क.ख. नास्ति. ६. 'इअफलइ कस्स वि' क.ख. ७. 'मणोरहाण' क.ख.ग., 'मनोरहाण' घ. ८. 'समवड्ढिआण' क., 'समवट्टिआण' ख.ग., 'समवढ्ढिआण' घ. ९. 'रूढपेम्माण' क.घ. १० 'मिहुणाण' घ. ११. Dr. R. G. Bhandarkar संपादिते मालतीमाधवे 'विधिरहो विशिनष्टि मनोरुजम्' इत्यपि पाठः.

प्रथमानुरागे वञ्चन[1]मात्रं विविधं यथा—

'[2]दिट्ठाइं जं ण दिट्ठो [3]आलविआए वि जं ण आलत्तो ।
उवआरो जं ण कओ तं [4]चिअ कलिअं छइल्लेहिं ॥ २५२ ॥'

[दृष्टया यन्न दृष्ट आलपितया यन्नालापितः ।
उपकारो यन्न कृतस्तदेव कलितं विदग्धैः ॥]

अत्र व्रीडादिभि[5]र्दर्शनादिभि[6]र्वञ्चनादिभिर्वैविध्यं प्रतीयते ॥

माने विरुद्धं यथा—

'ण मुअंति [7]दीहसासे ण रुअंति [8]ण होन्ति विरहकिसिआओ ।
धण्णाओं ताओं जाणं बहुवल्लह वल्लहो ण तुमम् ॥ २५३ ॥'

[न मुञ्चन्ति दीर्घश्वासान् न रुदन्ति न भवन्ति विरहकृशाः ।
धन्यास्ता यासां बहुवल्लभ वल्लभो न त्वम् ॥]

अत्रेर्ष्यायितादिभिर्वल्लभालिङ्गनादिविरुद्धैर्मानवती वञ्च्यते ॥

प्रवासे व्याविद्धं यथा—

'कइआ गओ पिओ अज्ज पुत्ति अज्जेण कइ दिणा होंति ।
एक्को एद्दहमेत्ते [9]भणिए मोहं गआ [10]कुंवरी ॥ २५४ ॥'

[कदा गतः प्रियोऽद्य पुत्रि अद्येति कति दिनानि भवन्ति ।
एक एतावन्मात्रे भणिते मोहं गता कुमारी ॥]

अत्रैकस्यापि दिवसस्य वर्षाय[11]माणतया विशेष[12]तो दैर्घ्यं प्रतीयते ॥

१. 'वञ्चनं' क. २.'दिट्ठाए' क.ख. ३. 'दिट्ठा' ख. ४. 'विअ' ग. ५. 'दर्शनादिभिः' क.ख. नास्ति. ६. 'वञ्चनाभिः' ख. नास्ति. ७. 'दीहसासं' गाथासप्त०. ८.'च्चिरं ण होन्ति किसिआओ' इति गाथासप्त०. ९. 'एद्दहमेत्तो' क.ख., 'एद्दहमत्ते' घ. १०. 'बाला' क.ख. ११. 'वर्षायमानतया' क.ख. १२. 'प्रियालिङ्गनादिवञ्चनया' इत्यधिकं क.ख.

करुणे निषिद्धं यथा—

'आवाअभअअरं चिअ[1] ण होइ दुक्खस्स दारुणं णिवहणं[2] ।
णाह जिअन्तीअ मए दिट्ठं सहिअं अ तुह इमं अवसाणम् ॥'

[आपातभयंकरमेव न भवति दुःखस्य दारुणं निर्वहणम् ।
नाथ जीवन्त्या मया दृष्टं सोढं च तवेदमवसानम् ॥]

तदेतद्रामविषये सीतायाश्चिराशंसितसमागमसुखावाप्तिव्यपायरूपं वचनं करुणे निषिध्यते ॥

प्रथमानुरागेण सह रागो यथा—

'सा महइ तस्स ण्हाउं अणुसोत्ते सोवि से समुव्वहइ ।
थणवट्टभिडणविलुलिअकल्लोलमहग्घिए सलिले ॥ २५६ ॥'

[सा वाञ्छति तस्य स्नातुमनुस्रोतसि सोऽप्यस्याः समुद्वहति ।
स्तनपृष्ठमिलनविलुलितकल्लोलमहार्घिते सलिले ॥]

अत्र द्वयोरप्येककालमन्योऽन्यानुरागः प्रतीयते तत्रैका लावण्यादिना रज्यतेऽन्यः स्नेहादिनेति ॥

तत्रैव पश्चाद्यथा—

'मामि हिअअं व पीअं तेण जुआणेण मज्जमाणाए[3] ।
ण्हाणहलिद्दा[4]कडुअं अणुसोत्तजलं पिअंतेण ॥ २५७ ॥'

[मातुलानि हृदयमेव पीतं तेन यूना मज्जमानायाः ।
स्नानहरिद्राकटुकमनुस्रोतोजलं पिबता ॥]

अत्रैकस्यानुरागं दृष्ट्वा पश्चाद्द्वितीयो रज्यते ॥

१. 'चिअ' ख. २. 'अवसाणं' क.ख. ३. 'मज्जमाणीए' क.ख. ४. 'हलद्दा' क.ख.

तत्रैवानुरूपो यथा[1]—

'सच्चं जाणइ दट्ठुं सरिसम्मि जणम्मि जुज्जए राओ ।
मरउ ण तुमं भणिस्सं मरणं वि[2] सेलाहणिज्जं से ॥२५८॥'

[सत्यं जानाति द्रष्टुं सदृशे जने युज्यते रागः ।
म्रियतां न त्वां भणिष्यामि मरणमपि श्लाघनीयमस्याः ॥]

अत्र न केवलं लावण्यादिनैव रज्यते किं तर्ह्यनुरूपविषयिणाभिलाषेणापीति प्रतीयते ॥

तत्रैवानुगतो यथा—

'गहवइसुएण समअं सच्चं अलिअं व किं विआरेण[3] ।
धण्णाइ हलिअकुमारिआइ[4] जणम्मि जणवाओ[5] ॥ २५९ ॥'

[गृहपतिसुतेन समकं सत्यमलीकं वा किं विचारेण ।
धन्याया हालिककुमारिकाया जने जनवादः ॥]

अत्र यद्यपि सौभाग्यादिप्रसिद्धिकृतसारूप्यं[6] न विद्यते तथापि स्त्रिया उत्तमप्रार्थनमगर्हितत्वादनुगतमेव भवति । सोऽयं करण[7]साधनोत्पत्तिपक्षे उक्तः । भावसाधनपक्षे तु सहार्थादिविशिष्टा रतिर्दीप्तिर्वा[8]नुरागशब्देनोच्यते । प्रथमं चोपजायमानत्वादयं प्रथमानुराग इति प्रथते[9] ॥

माने मान्यते[10] येनेति यथा—

'पाअपडणाणँ मुद्धे रहसवलामोडिअ[11]च्चिअव्वाणम् ।
दंसणमेत्त[12]पसिज्जिरि चुक्का बहुआण[13] सोक्खाणँ ॥ २६० ॥'

१. 'अनुरूपं' क.ख. २. 'मरणं वि' गाथासप्त०, 'मरणमपि' घ. ३. 'विअरेइ' क.ख. ४. 'उमारिआइ' क. ५. 'जणवादे' घ. ६. 'आनुरूप्यं' क.ख. ७. 'करणसाधारणसाधनोत्पत्ति' क., 'करुणसाधारण' ख. ८. 'सर्वत्र' इत्यधिकं क.ख. ९. 'प्रथते' इत्यस्य स्थाने 'प्रथमतो' इत्यग्रे संबद्धमास्ते' क.ख. १०. 'प्रथमतो माने' क., 'प्रथमतो मानः मान्यते' ख. ११. 'बलामोडिच्चुम्बिअव्वाणं' गाथासप्त०, 'बलात्कारचुम्बितव्यानाम्' इति च्छाया च., 'अव्वाण' ख. १२. 'पसण्णे' इति गाथासप्त०. १३. 'सुहाणं बहुआणम्' गाथासप्त०.

[पादपतनानां मुग्धे रभसबलात्कृतार्चितव्यानाम्।
दर्शनमात्रप्रसादनशीले भ्रष्टा बहूनां सौख्यानाम् ॥]

अत्र 'मान पूजायाम्' इति धातोः स्वार्थिकणिजन्ताण्णिचि घञि च मान इति रूपम्। से हि प्रेयांसमस्याः पादपतनादिपूजायां प्रयोजयति ॥

यं प्रियत्वेन मन्यते यथा—

'कारणगहिओ वि मए माणो एमेअ जं समोसरिओ।
अत्थक्कफुल्लअंकोल्ल तुज्झ तं मत्थए पडउ ॥ २६१ ॥'

[कारणगृहीतोऽपि मया मान एवमेव यत्समुपसृतः।
अकस्मात्फुल्लिताङ्कोल्ल तव तन्मस्तके पततु ॥]

अत्र 'मन ज्ञाने' इति धातुः। तथा हि मानं प्रियत्वेन मन्यमाना तदपहारिणेऽङ्कोल्लाय कापि मानिनी कुप्यति ॥

यः प्रेम मनुते यथा—

'जत्थ ण उज्जागरओ जत्थ ण ईसाविसूरणं माणम्।
सब्भावचाटुअं जत्थ णत्थि णेहो तहिं णत्थि ॥ २६२ ॥'

[यत्र नास्त्युज्जागरको यत्र नेर्ष्याखेदी मानः।
सद्भावचाटुकं यत्र नास्ति स्नेहस्तत्र नास्ति ॥]

अत्र 'मनु अवबोधने' इति धातुः। मानेन हि जनः प्रेमास्ति नास्ति वेति बुध्यते। तस्य च करणभूतस्यापि प्राधान्यादत्र कर्तृत्वोपचारः। तद्यथा 'प्रज्ञा पश्यति नो चक्षुर्दृष्टिः सारस्वती हि सा।' इति ॥

---

१. 'स्वार्थे' क.ख. २. 'स मानः' घ. ३. 'फुल्लि' क.ख.ग. ४. 'कामिनी' ख. ५. 'सम्बा व चाडुअं' क., 'सम्भाव बाडुअं' ख. ६. 'जनो बुध्यते' क.ख.

प्रेम मिमीते यथा—

'कुविआ[1] अ सच्चहामा[2] समे वि बहुआण णवर माणक्खलणे ।
पाअडिअहिअअसारो पेम्मासंघसरिसो पअट्टइ मण्णू ॥२६३॥'

[कुपिता च सत्यभामा समेऽपि बन्धूनां केवलं मानस्खलने ।
प्रकटितहृदयसारः प्रेमाश्वाससदृशः प्रवर्तते मन्युः ॥]

अत्र 'माङ् माने' इति धातोः 'कृत्यल्युटो बहुलम् ३।३।११३' इति कर्तरि ल्युट् । 'कोऽसावनुमान' इति भाष्यप्रयोगात् । तेन च यद्यपि करणभूतेनैवात्मनि रुक्मिण्यां च प्रियप्रेम्णः परिमाणं सत्यभामा प्रत्याययति तथापि पूर्ववदिहाप्ययं पूर्ववत्कर्तृत्वेनोपचर्यते[3] ॥

प्रवासे वसत इत्युपलक्षणेनात्मानमङ्गना[4] न भूषयन्ति यथा—

'साहीणे वि पिअअमे पत्ते वि खणे ण मण्डिओ अप्पा ।
दुक्खिअपउत्थवइअं[5] सअज्जिअं[6] संठवंतीए ॥ २६४ ॥'

[स्वाधीनेऽपि प्रियतमे प्राप्तेऽपि क्षणे न मण्डित आत्मा ।
दुःखितप्रोषितपतिकां प्रतिवेशिनीं संस्थापयन्त्या ॥]

अत्र 'वस आच्छादने' इत्यस्य 'प्रसरति' इत्यादिवन्निषेधार्थकप्रपूर्वस्य घञि[7] प्रवास[8] इति रूपं निरूप्यते ॥

युवानः प्रियासंनिधौ न वसन्ति यथा—

'विरहाणलो सहिज्जइ आसाबंधेण वल्लहजणस्स[9] ।
एक्कग्गामपवासो माए मरणं विसेसेइ ॥ २६५ ॥'

[विरहानलः सह्यत आशाबन्धेन वल्लभजनस्य ।
एकग्रामप्रवासो मातर्मरणं विशेषयति ॥]

---

१. 'ऊविआ' क. २. 'सच्चहासा' क. ३. 'पूर्ववत्कर्तृत्वेनोपयुज्यते' ख. ४. 'नात्मानमङ्गना भूषयन्ति' ख. ५. 'दुग्गअपउत्थवइअं' गाथासप्त०, 'दुर्गतप्रोषितपतिकां' इति च्छाया च. ६. 'सअज्झिअं' गाथासप्त०. ७. 'घञि च' क.ख. ८. 'प्रवास' ख. नास्ति. ९. 'दुल्लहजणस्स' क.ख.

अत्र दूरस्थयोरिवान्तिकस्थयोरपि संनिकर्षाभावात्प्रवासो भवति ॥

उत्कण्ठादिभिश्चेतो वासयति यथा—

'आलोअंत[1] दिसाओ ससंत जंभंत[2] गंत रोअन्त ।
मुंज्झंत[3] पॅडंत[4] हसंत पहिअ किं ते पउत्थेण ॥ २६६ ॥'

[आलोकयन् दिशः श्वसन् जृम्भमाणो गायन् रुदन् ।
मुह्यन् पतन् हसन् पथिक किं तेन प्रोषितेन ॥]

अत्रोत्कण्ठादिभिर्वासिते[5] चेतसि शून्यावलोकनादयोऽनुभावा जायन्ते ॥

प्रमापयति यथा—

'संजीवणोसहिम्मिव[6] सुअस्स[7] रक्खइ अणण्णवावारा ।
सासू णवब्भदंसणकंठागअजीविअं सोण्हम् ॥ २६७ ॥'

[संजीवनौषधिमिव सुतस्य रक्षत्यनन्यव्यापारा ।
श्वश्रूर्नवाभ्रदर्शनकण्ठागतजीवितां स्नुषाम् ॥]

अत्र प्रसादं करोतीत्यादिवत्प्रमापणोपक्रमोऽपि प्रमापणमुच्यते ॥

करुणे करोतेर्भूतोपादनार्थत्वे[8] कुरुते मूर्च्छां यथा—

'विअलिअविओअविअणं[9] तक्खणपब्भट्ठ[10]राममरणाआसम् ।
जणअतणआइ णवरं लद्धं मुच्छाणिमीलिअच्छीअ सुहं २६८'

[विगलितवियोगवेदनं तत्क्षणप्रभ्रष्टराममरणायासम् ।
जनकतनयया केवलं लब्धं मूर्च्छानिमीलिताक्ष्या सुखम् ॥]

अत्र सीतायाः पतिशोकप्रकर्षेणाभूतौ[11] मूर्च्छोत्पद्यते ॥

---

१.'आलोअन्तिं' क.ख. २. 'जम्मन्त' (?) गाथासप्त०. ३. 'मुच्छन्त' गाथासप्त०. ४.'पडन्त खलन्त' घ. ५.'उत्कण्ठादिनिर्वासिते' क. ६.'संजीवणोसहम्मिव' गाथासप्त०. ७.'पिअस्स' क.ख. ८.'करोतेरनुभूतोपादानार्थत्वे' क.ख., 'करोतेरभूतोत्पादनार्थत्वे' घ. ९. 'विसरिअ विओअदुक्खं' सेतुबन्धे पाठः., 'विस्मृतवियोगदुःखं' इति च्छाया च. १०. 'पब्भट्ठ' सेतुबन्धं, 'पम्बट्ठ' क., 'पम्हव्व' ग. ११. 'प्रकर्षेण भूता' क.

उच्चारणार्थत्वे कुरुते विलापं यथा—

'पुहवीअ होहिइ[1] पई बहुपुरिसविसेसचंचला राअसिरी ।
कह ता महच्चिअ[2] इमं णीसामण्णं उवट्ठिअं[3] वेहव्वम् ॥ २६९ ॥'

[पृथिव्या भविष्यति पतिर्बहुपुरुषविशेषचञ्चला राज्यलक्ष्मीः ।
कथं तन्ममैवेदं निःसामान्यमुपस्थितं वैधव्यम् ॥]

अत्र रामदुःखेन[4] विलपन्ती सीतेदमुच्चरति[5] ॥

अवस्थापनार्थे[6] कुरुते साहसे मनो यथा—

'इयमेत्य[7] पतङ्गवर्त्मना पुनरङ्काश्रयिणी भवामि ते ।
चतुरैः सुरकामिनीजनैः प्रिय यावन्न विलुप्यसे[8] दिवि ॥२७०॥'

अत्र रतेः कामशोकेन[9] मरणसाहसे मनोऽवस्थाप्यते ॥

अभ्यञ्जनार्थत्वे करोति चित्तं दुःखेन यथा—

'दलति हृदयं गाढोद्वेगं द्विधा तु न[10] भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥२७१॥'

अत्र रामादेर्दुःखेन[11] चित्तमभ्यज्यते ॥

संभोगनिरुक्तिषु प्रथमानुरागानन्तरे पालनार्थो[12] यथा—

'दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।

---

१. 'होइहि' क.ख.ग., 'होहिइ' सेतुबन्धे, 'होइ' घ. २. 'महं च्चिअ' सेतुबन्धे. ३. 'उअत्थिअं' सेतुबन्धे, 'उअट्ठिअं' ग. ४. 'अत्र प्रवासदुःखेन' क.ख. ५. 'सीता विलपन्ती' क.ख., 'सीता' ग. नास्ति. ६. 'अवस्थापनार्थत्वे' क.ख.ग. ७. 'अहमेत्य' मुद्रितकुमारसंभवे. ८. 'विलोभ्यसे' मुद्रितकुमारसंभवे, ख. ९. 'शोकोद्वेगाद्' मुद्रित उत्तररामचरिते. १०. 'न तु भिद्यते' क.ख. ११. 'बामादेः' ग.घ. १२. 'पालनार्थे' घ.

निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
बाला वामतयैव संप्रति मम प्रीत्यै नवोढा प्रिया ॥२७२'

अत्राप्रागल्भ्यवामताभ्यामनुकूलायामपि नवोढायामिच्छानुवृत्त्या रतिः पाल्यते ॥

मानानन्तरे कौटिल्यार्थो यथा—

'पादे मूर्धनि ताम्रतामुपगते कर्णोत्पले चूर्णिते
छिन्ने हारलतागुणे करतले संपातजातव्रणे ।
अप्राप्तप्रियताडनव्यतिकरा हन्तुं पुनः कोपिता
वाञ्छन्ती मुहुरेणशावनयना पर्याकुला रोदिति ॥२७३॥'

अत्र प्रेम्णः स्वभावकुटिलत्वान्मानवत्याः कचग्रहणेन यत्पादताडनादिरूपाः कुटिला एव संभोगा जायन्ते ॥

प्रवासानन्तरेऽभ्यवहारार्थो यथा—

'वसिष्ठधेनोरनुयायिनं तमावर्तमानं वनिता वनान्तात् ।
पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥२७४॥'

अत्र उत्तरार्धेनोपोषितस्यान्नोपयोग इव प्रियालोकजन्मा पिबतेरभ्यवहारः कथ्यते ॥

करुणानन्तरेऽनुभवार्थो यथा—

'अणुमरणपत्थिआए पच्चागअजीविए पिअअमम्मि ।
वेहव्वमंडणं कुलवहूअ सोहग्गअं जाअम् ॥ २७५ ॥'

[अनुमरणप्रस्थितायाः प्रत्यागतजीविते प्रियतमे ।
वैधव्यमण्डनं कुलवध्वाः सौभाग्यकं जातम् ॥]

---

१. 'मेऽद्य सुतरां' इति मुद्रिते नागानन्दपुस्तके. २. 'पर्याकुलं' क.ख. ३. 'कुटिला एव जायन्ते' क., 'कुटिला एव संभोगा जायन्ते' ख. ४. 'उत्तरार्धे' क.ख. ५. 'अभ्यवहारार्थः' ख. ६. 'जीएम्मि' क., 'जीविएम्मि' ख.

अत्र यथेयं मत्प्राणभूतैवमस्या अहमपि जीवितमेवेति पत्या विस्रम्भजोऽनुराग[1]ः पत्न्याः पुनः प्रेत्यापि यत्संगमो मयाभिलषितः सोऽयं जीवन्त्यैव जीवितेश्वरः समासादित इति विस्रम्भादतिसुखमेवानुभूयते ॥

अत्र प्रथमानुरागानन्तरे संभोगः संक्षिप्तो यथा—

'अपेतव्याहारं धुत[2]विविधशिल्पव्यतिकरं
करस्पर्शारम्भ[3]प्रगलितदुकूलान्तशयनम् ।
मुहुर्बद्धोत्कम्पं दिशि दिशि मुहुः प्रेरितदृशो-
रहल्यासुत्राम्णोः क्षणिकमिह तत्संगतमभूत् ॥ २७६ ॥'

अत्र संक्षेपो निगदेनैव व्याख्यायते ॥

स एव मानानन्तरे संकीर्णो यथा—

'अणुणिअखणलद्धसुहे पुणो वि संभरिअमण्णुदूमिअविहँले[4] ।
हिअए माणवईणं चिरेण पणँअगरुओ[5] पसम्मई रोसो २७७'

[अनुनीतक्षणलब्धसुखे पुनरपि संस्मृतमन्युदूनितविह्वले ।
हृदये मानवतीनां चिरेण प्रणयगुरुकः प्रशाम्यति रोषः ॥]

अत्रावस्थिता प्रकृष्टा च रतिर्व्यलीकस्मरणादिभिः संकीर्यते ॥

प्रवासानन्तरे संपूर्णो[6] यथा—

'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानेताँन्[7]गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ २७८ ॥'

---

१. 'राग·' क.ख. २. 'च्युतविविध' क.ख. ३. 'करस्पर्शारम्भे' क. ४. 'विहलो' क. ५. 'पअणगरुओ' ख. ६. 'संपूर्णा' क.ख. ७. 'शेषान्मासान्' मुद्रिते मेघदूते.

अत्रामुना विरहिवाक्येनापि निर्वेक्ष्याव इति भविष्यत्कालोपाधेः प्रवासा[1]नन्तरेऽप्यविरुध्यमानेन तं तमात्माभिलाषमित्यादिना तदानीन्तनसंभो[2]गस्य संपूर्णत्वं वर्ण्यते ॥

करुणानन्तरे समृद्धो यथा—

'तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
र्देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।
पूर्वाकाराधिकतररु[3]चा संगतः कान्तयासौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥ २७९ ॥'

अत्रोत्तरार्धेनेन्दुमत्यजयोर्लोकान्तरप्रत्युज्जीवनेन संभोगसमृद्धिः प्रतिपाद्यते ॥

प्रथमानुरागानन्तरे सहार्थान्वयो यथा—

'मुहपेच्छओ पई से सावि हु पि[4]अरूअदंसणुम्मइआ ।
दो वि कअत्था पु[5]हँविं अ[6]पुरिसमहिलं त्ति मण्णंति ॥२८०॥'

[मुखप्रेक्षकः पतिस्तस्याः सापि खलु प्रियरूपदर्शनोन्मत्ता ।
द्वावपि कृतार्थौ पृथिवीमपुरुषमहिलेति मन्येते ॥]

अत्र पूर्वार्धे रञ्जयत्यर्थ उत्तरार्धे राजत्यर्थः प्रथमानुरागे सह भा[7]वेन सिद्धस्तदनन्तरेऽपि तथैवानुवर्तते ॥

तत्रैव पश्चादर्थान्वयो यथा—

'अद्य प्रभृत्यवनताङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।

१. 'प्रवेशानन्तरे' क.ख. २. 'भोग्यस्य' क.ख. ३. 'पूर्वाकाराधिकचतुरया' Mr. S. P. Pandit M. A. संपादिते रघुवंशे, क.ग.घ. ४. 'सविसेसदंसणुम्मइआ' इति गाथासप्त० ५. 'पुहइं' इति गाथासप्त०. ६. 'अमहिलपुरिसं व' इति गाथासप्त०. ७. 'सिद्धभावेन सिद्धः' क.ख.

अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ २८१ ॥'

अत्र रञ्जयत्यर्थः प्रथमानुरागे पुंसि पश्चाद्भावेन सिद्धस्तदनन्तरेऽपि तथैवानुवर्तते ॥

अत्रैवानुरूपार्थान्वयो यथा—

'शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ २८२ ॥'

अत्र राजत्यर्थः प्रथमानुरागे स्त्रीपुंसयोरप्यानुरूप्येण सिद्धस्तदनन्तरेऽपि तथैवानुवर्तते ॥

तत्रैवानुगतार्थान्वयो यथा—

'स्थाने तपो दुश्चरमेतदर्थमपर्णया पेलवयाभितप्तम्[1] ।
या दास्यमप्यस्य लभेत नारी सा स्यात्कृतार्था किमुताङ्कशय्याम् ॥२८३॥'

अत्र पूर्वार्धे रञ्जयत्यर्थः प्रथमानुरागेऽनुगतार्थत्वेन[2] सिद्धस्तदनन्तरे तथैवानुवर्तते । सोऽयं करणसाधनः[3] प्रत्ययोत्पत्तिपक्ष उक्तः । भावसाधनपक्षे तु सर्वत्र सहार्थादिविशिष्टा रतिर्दीप्तिर्वानुरागशब्देनोच्यमाना तदनन्तरेऽपि समाससामर्थ्यादनुवर्तते । कः पुनरत्र समासः । षष्ठीलक्षणस्तत्पुरुषः[4] । प्रथमानुरागस्यानन्तरः प्रथमानुरागानन्तर इति । का च वृत्तिः । अजहत्स्वार्था न ह्यत्र नायकौ मिथः समागतावपि प्रथमानुरागमुत्सृजतः । युक्तं पुनर्यदजहत्स्वार्था परार्थाभिधानरूपा वृत्तिः स्यात्;

१. 'पेलवयापि तप्तं' इति मुद्रिते कुमारसंभवे, 'पेलवयाधितप्तं' क. २. 'प्रथमानुगतार्थत्वेन' ख. ३. 'करुणसाधनः' ख. ४. 'इति' इत्यधिकमत्रास्ति क.ख.

अवश्यं ह्यनेन परस्यार्थमभिदधता स्वार्थ उत्स्रष्टव्यः। बाढं युक्तम्। एवं हि दृश्यते लोके भिक्षुको द्वितीयां[1] भिक्षामासाद्य पूर्वां न जहाति संचयायैव यतते, एवं तर्हि द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति। कस्या विभक्तेः। षष्ठ्याः। न षष्ठीसमर्थोऽनन्तरः। तर्हि प्रथमायाः। न प्रथमासमर्थः प्रथमानुरागः संबन्धाधिक्यात्। अभिहितः सोऽर्थोऽन्तर्भूतः[2] प्रातिपदिकार्थः संपन्न इति सामर्थ्यं भविष्यति। मैवम्। इह प्रथमानुरागानन्तर इत्येतस्मात्[3]समुदायाद्विभक्त्या उत्पत्तव्यम्। तेन च समुदायेनैको[4]ऽर्थपिण्डो मृत्पिण्ड इवाविभागा[5]पन्नपांसूदकविभागोऽवयवार्थशक्त्यानुगृहीतः पृथगव्यपदेश्यावयवशक्तिरभिधीयते। तस्मिंश्च समुदायार्थ एकत्वं समवेतमतो विद्यमानायामप्यवयवसंख्यायां तदाश्रया सुबुत्पत्तिर्न भविष्यति॥

मानानन्तरे पूजार्थान्वयो यथा—

'न स्पृष्टोऽपि त्रिदशसरिता दूरमीर्ष्यानुबन्धा-
न्नाप्युन्मृ[6]ष्टो भुजगपतिना तर्जनाभिर्जयायाः।
मानस्यान्ते नयनसलिलैः क्षालितः शैलपुत्र्या
पत्युर्मौलौ नतियुजि जयत्यात्मनः पादपांसुः॥ २८४॥'

अत्र पादपतनादिपूजा मानसिद्धा तदनन्तरेऽप्यनुवर्तते॥

अत्रैव मानं प्रति प्रियत्वाभिमाना[7]र्थान्वयो यथा—

'विहायैतन्मानव्यसनमनयोरुच्चकुचयो-
र्नि[8]धेयः प्रेयांस्ते यदि वयमनुल्लङ्घ्यवचसः।

---

१. 'न द्वितीयां भिक्षां' क., 'यद्वितीयां भिक्षाम्' ख. २. 'अत्रान्तर्भूतः' क.ख. ३. 'इत्यस्मात्' क.ख. ४. 'तेन चैकोऽर्थः' ख. ५. 'अविभागोत्पन्न' क.ख. ६. 'नाप्युत्सृष्टो' क.ख. ७. 'प्रियत्वाभिमानान्वयो' क.ख. ८. 'विधेयः' क.ख.

सखीभ्यः स्निग्धाभ्यो गि[1]रमिति निशम्यैणनयना
निवापाम्भो दत्ते नयनसलिलैर्मानसुहृदे ॥ २८५ ॥'

अत्र मानं प्रति प्रियत्वाभिमानो मानानन्तरेऽप्यनुवर्तते ॥

अत्रैव प्रेमावरोधार्थान्वयो यथा—

'दूमेंति जे मुहुत्तं कुविअं दासव जे[2] पसाएंति[3] ।
ते च्चिअ महिलाण पिआ सेसा सामि च्चिअ वरा[4]ओ २८६'

[दूनयन्ति ये मुहूर्तं कुपितां दासा इव ये प्रसादयन्ति ।
त एव महिलानां प्रियाः शेषाः स्वामिन एव वराकाः ॥]

अत्रास्यामपि प्रेमास्ति नै[5]ास्ति वेति जिज्ञासुः प्रि[6]यः प्रियां केलीगोत्रस्खलनादिना दुनोति । सा च प्रेमवत्यवश्यमस्मै कुप्यति । स चोपलब्धप्रेमा दासवँ[7]देनां प्रसादयति । अथैषात्मनि प्रेमास्तित्वमवबुध्यते[8] । सोऽयं मानसिद्धोऽर्थस्तदनन्तरेऽप्यनुवर्तते ॥

तत्रैव प्रेमप्रमाणा[9]र्थान्वयो यथा—

'सुरकुसुमेहिं कलुसिअं जइ तेहिं च्चिअ पुणो पसाएमि तुमं ।
तो पेम्मस्स किसोअरि अवराहस्सं अ ण मे कअं अणुरू[10]अं २८७'

[सुरकुसुमैः कलुषितां यदि तैरेव पुनः प्रसादयामि त्वाम् ।
ततः प्रेम्णः कृशोदरि अपराधस्य च न मे कृतमनुरूपम् ॥]

अत्र रुक्मिण्याः सुरकुसुममञ्जरी दत्ता मम तु सुरतरुरेव प्रेयसा प्रतिपन्नस्तदहमस्याः स[11]हस्रगुणत्वेन प्रियतमेति सत्यभामा स्वप्रेमाणं

---

१. 'शिवमिति' क.ख. २. 'ते' ख. ३. 'पसाअंति' क.ख.ग. ४. 'वरोआ' ख. ५. 'न वे ति' क.ख.घ. ६. 'प्रियः' नास्ति ग. ७. 'न दासवदेनां प्रवासयति' क., 'तद्दासवदेनां प्रसादयति' ख. ८. 'अनुबध्यते' ख. ९. 'प्रेमप्रमापणार्थान्वयो' क. १०. 'अणुरूवं' घ. ११. 'सहस्रगुणेन' क.ख.

[1]मिमीते। स चायमर्थो [2]मानेन सिद्धस्तदनन्तरेऽपि समाससामर्थ्यादनुवर्तते। कः पुनरत्र समासः। षष्ठीतत्पुरुष एव। का वृत्तिः। प्रथमानुरागा[3]नन्तरवदजहत्स्वार्थैव। युक्तं तत्र विस्रम्भणादावपि प्रथमानुरागस्य विद्यमानत्वात्। इह तु माननिवृत्तौ मानापगमादयो जायन्ते। अन्वयाद्विशेषणं भविष्यति। तद्यथा—घृतघटस्तैलघट इति निषिक्तेऽपि घृते तैले [6]वा [4]घृतघटोऽयं तैलघटोऽयमित्यन्वयात्पूर्वपदार्थो विशेषणं भवति। [5]भवति तत्र या च यावती चार्थमात्रा इहापि तत्तुल्यमेव॥

तथा हि—

'सकअग्गह[7]तंसुण्णामिआणणा पिअइ पिअअ[8]मविइण्णम्।
[9]थोअं थोअं रोसोसंधं [10]व [11]माणंसिण मइरम्॥ २८८॥'

[सकचग्रहत्रस्तावनामितानना पिबति प्रियतमवितीर्णम्।
स्तोकं स्तोकं रोषौषधमिव मानिनी मदिराम्॥]

सकषायैरेव वाक्यैर्नायकं निस्तुदन्ती शयनीयं गच्छेदिति मानशेषान्वयो दृश्यते॥

प्रवासानन्तरे प्रिया न वसत इत्यर्थस्यान्वयो यथा—

'वसने परिधूसरे वसाना नियमक्षा[12]मतनुः कृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरह[13]व्रतं बिभर्ति २८९'

---

१. 'प्रमिमीते' ख. २. 'मानसिद्धः' क.ख. ३. 'प्रथमानुरागानन्तरम्' क.ख. ४. 'अयं घृतघटः, अयं तैलघटः' क.ख. ५. 'भवति' ख. नास्ति. ६. 'वा' क.ख. ७.'रहसुत्ताणिआणणा' इति गाथासप्त० ख., 'रभसोच्चानितानना' इति च्छाया. ८.'पिअमुह विइण्णम्' इति गाथासप्त०, 'प्रियमुखवितीर्णा' इति च्छाया च. ९. 'थोअं थोअं' इति गाथासप्त०, 'थोअत्थोअं' क., 'थोअथोअं' घ., 'त्थोअं त्थोअं' ख. १०. 'महं व' इति गाथासप्त०. ११. 'उअ माणिणी' इति गाथासप्त०. १२. 'नियमक्षाममुखी धृतैकवेणिः' इति मुद्रितेऽभिज्ञानशाकुन्तले. १३. 'विरहज्वरम्' क.ख.

अत्र दुष्यन्तेन शकुन्तलायाः प्रवासे विभूषणाद्यग्रहणं यदवगतं तत्[1]तदनन्तरेऽप्यनुवर्तमानं प्रेमप्रकर्षाय भवति ॥

तत्रैव[2] युवानः प्रियसंनिधौ न वसन्तीत्यर्थस्यान्वयो यथा—

'समर्थये यत्प्रथमं प्रियां प्रति क्षणेन तन्मे परिवर्ततेऽन्यथा ।
अतो विनिद्रे सहसा विलोचने करोमि न स्पर्शविभावितां[3]प्रियः २९०'

अत्र पुरूरवाः प्रवासान्मत्त उर्वशीबुध्या लतादिकं यद्[4]दाससाद तत्[5]तदानेकशोऽन्यथा बभूव । तत्[6]संस्काराच्चायं यस्या लतारूपपरिवर्तनं प्रत्येति सोऽयं प्रियासंनिधौ यूनामवा[7]सः संसिद्धस्तदनन्तरेऽप्यनुवर्तते ॥

अत्रैवोत्कण्ठादिभिश्चेतो वासयतीत्यर्थस्यान्वयो यथा—

'अब्बो[8] दुक्करआरअ पुणो वि तत्तिं करेसि गमणस्स ।
अज्ज वि ण होंति सरला वेणीअ तरंगिणो चिउरा[9] २९१'

[हे दुष्करकारक पुनरपि चिन्तां करोषि गमनस्य ।
अद्यापि न भवन्ति सरला वेण्यास्तरङ्गिणश्चिकुराः ॥]

अत्र प्रवासा[10]नुभूतभृशोत्कण्ठादिचित्तवास[11]नाः प्रवासानन्तरेऽपि तस्या नोप[12]शाम्यन्तीति वेणिकावर्णनादिना सूच्यते ॥

अत्रैव प्रमापयतीत्यर्थस्यान्वयो यथा—

'त्वद्वियोगोद्भवे चण्डि मया तमसि मज्जता ।
दिष्ट्या प्रत्युपलब्धासि चेतनेव गतासुना ॥ २९२ ॥'

---

१. 'तदनन्तरे' क.ख. २. 'अत्रैव' क.ख. ३. 'स्पर्शविभावितप्रियः' क.ख. मुद्रिते विक्रमोर्वशीये च. ४. 'यद्यदासादयति' क. ५. 'तत्तदनेकशो' क.ख. ६. 'तत्तत्संकारात्' क.ख. ७. 'अवासः प्रवासः' क.ख. ८. 'अब्बो' इति खेदे. ९. 'चिहुरा' क.ख.ग. १०. 'प्रवासोद्भूत' क.ख. ११. 'चित्तवासना' ख. १२. 'नो शाम्यतीति' क.ख.

अत्रोर्वशीविरहात्पुरूरवा उत्तरां कामावस्थां प्रपन्नः प्रियाप्राप्तौ प्रेत्येव प्रत्युज्जीवितस्तदेवानुसंधत्ते । सोऽयं प्रमापणार्थः प्रवाससिद्धस्तदनन्तरेऽपि समाससामर्थ्यादनुवर्तते । कः पुनरत्र समासः । षष्ठीतत्पुरुष एव । का वृत्तिः । न तावदनुत्सृष्टस्वार्था, नहि प्रोष्यसमागतयोः प्रवाससंबन्धोऽपि विद्यते । उत्सृष्टस्वार्था तदिह भवतु । युक्तं पुनर्यदुत्सृष्टस्वार्था नाम वृत्तिः स्यात् । बाढं युक्तम् । एवं हि दृश्यते लोके—पुरुषोऽयं परकर्मणि प्रवर्तमानः स्वकर्मोत्सृजति । तद्यथा तक्षा राजकर्मणि प्रवर्तमानस्तक्षकर्मोत्सृजति । नन्वेवं सति राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति । नैष दोषः । उत्सृजन्नप्ययं स्वार्थं नात्यन्तायोत्सृजति, यः परार्थविरोधी स्वार्थस्तमेवोत्सृजति । तद्यथा तक्षा राजकर्मणि प्रवर्तमानस्तक्षकर्मोत्सृजति न तु स्थितविहसितकम्पितादीनि । न चायमर्थः परार्थविरोधी विशेषणं नाम । तस्मान्नोत्स्रक्ष्यति ॥

करुणानन्तरेऽनुभूतप्रादुर्भावान्वयार्थो यथा—

'जयन्ति जायाश्लिष्टस्य शम्भोरम्भोधिमन्थने ।
मग्नामृतविषास्वादमदमूर्च्छा मनोमुदः ॥ २९३ ॥'

अत्र दाक्षायण्या हैमवतीत्वेन करुणानन्तरत्वम् । तत्र करुणदुःखेन मूर्च्छादयः प्रादुरासन् । इह त्वानन्देन ते प्रादुर्भवन्ति ॥

तत्रैवोच्चारणान्वयार्थो यथा—

'क्लाम्यन्ती यदुपेक्षितासि पुरतः कामो यदग्रे हतः
क्लिष्टं यत्तपसा वपुर्यदपि च प्रोक्ता बटुच्छद्मना ।
तत्सर्वं प्रणतस्य मेऽद्य दयिते दाक्षायणि क्षम्यता-
मित्युक्त्वा चरणाब्जयोर्विजयते लुण्ठन्शिवायाः शिवः २९४'

१. 'विरहे' क.ख. २. 'कामावस्थामापन्नः' क.ख. ३. 'कात्र वृत्तिः' क.ख. ४. 'प्रादुर्भावार्थान्वयार्थो' ख. ५. 'दाक्षायिण्या' ग.घ. ६. 'लुण्ठन्' क.ख.

अत्र करुणावस्थायां प्रियापादाब्जयोर्लुण्ठता शोकेन यो विलापः कृतः स इह प्रकर्षालापत्वेन विपरिणमति[1] ॥

अत्रैव मनोऽवस्थापनान्वयार्थो यथा—

'अखण्डितं प्रेम लभस्व पत्युरित्युच्यते ताभिरुमा स्म नम्रा ।
तया तु तस्यार्धशरीरलाभादधःकृताः स्निग्धजनाशिषोऽपि २९५'

अत्रैव—

'यदैव पूर्वं ज्वलने शरीरं सा दक्षरोषात्सुदती[2] ससर्ज ।
ततःप्रभृत्येव विमुक्तसङ्गः पतिः पशूनामपरिग्रहोऽभूत् ॥२९६॥'

इति करुणावस्थायामतिस्नेहेनापरिग्रहत्वसाहसे यन्मनोऽवस्थापितं तदिहार्धशरीरप्रदानमहासाहसमेवावतिष्ठते ॥

तत्रैवाभ्यञ्जनान्वयार्थो यथा—

'भिन्ने सद्यः समाधावुपरमति परज्योतिषि स्पन्दसंज्ञे
संज्ञामापद्यमाने मृदुमनसि मनागुन्मिषत्स्विन्द्रियेषु ।
व्यापारे पारवश्यं विसृजति मरुति ब्रह्मसब्रह्मचारी
वामार्धस्पर्शजन्मा जयति पुररिपोरन्तरानन्दपूरः ॥ २९७ ॥'

अत्र यत्करुणावस्थायां मनः शोकप्रकर्षेणाभ्यक्तमासीत्तदिह प्रिया-श्लेषजन्मना परमानन्देनाभ्यज्यते । सोऽयं करुणधर्मान्वयस्तदनन्तरेऽपि[3] समाससामर्थ्याद्भवति । कः पुनरत्र समासः । षष्ठीतत्पुरुष एव । का वृत्तिः । जहत्स्वार्था । न ह्यत्र करुणार्थस्य गन्धोऽपि । कथं तर्ह्यन्वयः । यथा मल्लिकापुटः चम्पकपुट इत्यत्र निःकीर्णास्वपि[4] सुमनःसु मल्लिकादि-र्वासनावशाद्विशेषणं भवति—अयं मल्लिकापुटोऽयं चम्पकपुट इति, एवं

१. 'परिणमति' क.ख. २. 'साक्षादरोषात्' घ. ३. 'करुणधर्मसमन्वयः' क. ख. ४. 'निगीर्णासु' ख.

निवृत्तेऽपि स्वार्थे वासनावशात्करुणोऽनन्तरस्य विशेषणं भवति। अस्तु वा प्रथमानुरागादिष्वपि जहत्स्वार्थैव वृत्तिः। नन्वेवं राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति। नैष दोषः। वृत्तौ समर्थाधिकारः क्रियते। सामर्थ्यं च भेदः संसर्ग उभयं वा। तत्र राज्ञ इत्युक्ते सर्वं[1] स्वं प्रसक्तम्। पुरुष इत्युक्ते सर्वः स्वामी प्रसक्तः। इहेदानीं राजपुरुषमानयेत्युक्ते राजा पुरुषं निवर्तयत्यन्येभ्यः स्वामिभ्यः; पुरुषोऽपि राजानमन्येभ्यः स्वेभ्यः[2]। एवमस्मिन्नुभयतो व्यवच्छिन्ने यदि राजार्थो निवर्तते, कामं निवर्तताम्। न जा[3]तुचित्पुरुषमात्रस्यानयनं भविष्यति। प्राक्[4] च वृत्तेरकृतार्थस्य निवृत्तौ सामर्थ्याभावाद्वृत्तिरेव न स्यात्। वृत्तिनिमित्ता च निवृत्तिस्तस्माददोष इति। तत्र राज्ञः पुरुष इत्यत्र यदा तावदवधृतपरा[5]यत्तवृत्तिरयं पुरुषो न स्वतन्त्रस्तदा स्वामिसंसर्गस्यावगतत्वात्स्वामिविशेषज्ञानायोपादीयमानो राजशब्दः स्वाम्यन्तरेभ्यः पुरुषं व्यावर्तयति। सोऽयं स्वाम्यन्तरव्यवच्छेदो भेद [6]इत्युच्यते। यदा पुनरनवगतपरायत्तभावस्य पुरुषस्य स्वामिसंबन्धद्योतनाय राजशब्दः प्रयुज्यते तदा विशेषसंसर्गस्य[7] शब्दोपादानत्वादनवकाशो विशेषान्तरसंपात इत्यशब्दा[8] स्वाम्यन्तरनिवृत्तिरवसीयते। यदा त्वर्थान्तरनिवृत्तिं वार्थसंसर्गं[9] वाभिसंधायोपसर्जनपदानि प्रयुज्यन्ते तदा शब्दार्थसामर्थ्ययोः प्रतिपत्तिनिबन्धनयोरभेदापे[10]क्षया भेदसंसर्गसमुदयः सामर्थ्यं भवति। यथा नीलं च तदुत्पलं चेति नीलोत्पलम्। प्रथमश्चासावनुरागश्चेति प्रथमानुराग इति,

---

१. 'सर्वस्वं' घ. २. 'स्वेभ्यः' क. नास्ति. ३. 'जातु कश्चित्' क.ख. ४. 'प्राक् प्रवृत्तेः' ख., 'प्राक् च प्रवृत्तैः' ग. ५. 'यत्र' ग.घ. ६. 'इति' ख. नास्ति. ७. 'विशेषसंसर्गं चाभिसंधायोपसर्जनस्य' ख. ८. 'अशाब्दी' क. ९. 'स्वात्मसंसर्गं च' क., 'स्वार्थसंसर्गं च' ख. १०. 'अभेदापेक्षायाम्' क. ख.ग. पुस्तके पाठोऽयं त्रुटितः.

प्रथमानुरागानन्तर इत्यादिषु च भेदसामर्थ्यं यथा राज्ञो भृत्य इति । यतोऽनन्तर इत्युक्तेऽवधृतमिदं कस्याप्यवधेरनन्तरोऽयं न स्वतन्त्र इति सर्वोऽवधिः प्रसक्तः । प्रथमानुरागस्येत्युक्ते सर्वः संबन्धी प्रसक्तः । इहेदानीं प्रथमानुरागानन्तर इत्युक्ते प्रथमानुरागोऽनन्तरं निवर्तयत्यन्येभ्योऽवधिभ्यः । अनन्तरः प्रथमानुरागं निवर्तयत्यन्येभ्यः संबन्धिभ्यः । तत्र योऽसौ भेदस्तत्सामर्थ्यं च, तन्निमित्ता च वृत्तिः । भेदनिमित्तायां च वृत्तौ सत्यां वृत्त्यभिमुखस्य भेदमुपजनय्योपसर्जनस्य प्रथमानुरागस्यार्थो निवर्तते। यस्यापि प्रधानस्यानन्तरस्यावधिमतो निवर्तते सोऽप्यवधिमवच्छिनत्ति । एवमुभयतो व्यवच्छेदे निर्ज्ञातेऽनन्तरविशेषे समुदायार्थे चान्यस्मिन्प्रादुर्भवति । यदि प्रथमानुरागाद्यर्थो निवर्तते, कामं निवर्तताम्, न जातुचिदवधिमन्मात्रस्य संप्रत्ययो भविष्यति । ननु चान्वयव्यतिरेकाभ्यां जहत्स्वार्थत्वं नोपपद्यते । तथा हि 'प्रथमानुरागानन्तरे' इत्युक्ते कश्चिच्छब्दः श्रूयते । प्रथमानुरागेत्यनन्तरेति च प्रतीयमानविभागः, अर्थोऽपि कश्चिद्गम्यते कन्याविस्रम्भणादिरवधिमत्त्वं च। 'मानानन्तरे' इत्युक्ते कश्चिच्छब्दभागो हीयते, कश्चिदुपजायते, कश्चिदन्वयी । प्रथमानुरागेति हीयते, मानेत्युपजायते, अनन्तर इत्यन्वयी । अर्थोऽपि कश्चिद्धीयते, कश्चिदुपजायते, कश्चिदन्वयी । कन्याविस्रम्भणादिर्हीयते, मानशैथिल्यादिरुपजायते, अवधिमत्त्वमन्वयि[3] । तेन मन्यामहे यः शब्दभागो हीयते तस्यासावर्थः; योऽर्थो हीयते, य उपजायते तस्यायमर्थो; योऽर्थ उपजायते, योऽन्वयी तस्यासावर्थो; योऽर्थः सोऽन्वयीति । मैवम् । यतोऽनन्यथासिद्धाभ्यामेवान्वयव्यतिरेकाभ्यां शब्दा-

१. 'जातु क्वचित्' क.ख. २. 'मान्येति' ख. ३. 'अन्वयित्वेन' क.ख.

र्थयोः संबन्धावधारणम् । अन्यथासिद्धौ चेमौ । तथा हि यत्र बृंहितं हीयते, हेषितमुपजायते, रेणुचक्रमन्वयि; तत्र हस्तिनो हीयन्ते, अश्वा उपजायन्ते, पिपीलिका अन्वयिन्यः । न चैतावता रेणुचक्रादिपिपीलिकाः कारणं भवति । यत्र वा क्षीरं हीयते, दध्युपजायते, पात्रमन्वयि, तत्र माधुर्यं हीयते, अम्लतोपजायते, तृप्तिरन्वयिनी । न चैतावता पात्रस्य तृप्तिः कार्यं भवति । अवधृतं हि सामर्थ्यमन्वयव्यतिरेकाभ्यां प्रविभज्यते । यथा लोके बधिरोऽपि चक्षुष्मानालोकयति, सत्यपि श्रोत्र उपहतचक्षुर्नालोकयति रूपमित्यन्वयव्यतिरेकाभ्यां चक्षुःश्रोत्रसंनिधाने रूपालोकनं चक्षुष एव व्यवस्थाप्यते न श्रोत्रस्य। यस्य केवलस्य योऽर्थोऽवधृतः पदार्थान्तरसंनिधानेऽपि तस्य स एव । नहि रसनमसंनिधौ दर्शनस्य मधुरादिव्यञ्जकं दर्शनसंनिधौ नीलादिव्यक्तिं प्रति सामर्थ्यं लभते । प्रथमानुरागशब्दस्य केवलस्योत्कण्ठादिषु, मानशब्दस्येर्ष्यायितादिषु, अनन्तरशब्दस्य पुनरवधिमत्स्वेव सामर्थ्यमवधृतमतस्तेषां तावानेवार्थो भवति । यः पुनः पदयोरन्योन्योपश्लेषाद्विस्रम्भणादिर्मानशैथिल्यादिर्वावधिमद्विशेषोऽन्यावधिकः प्रतीयते वाक्यार्थः स भवतीति[1] । यदि वा[2] यथानपेक्षितावयवार्था वृक्षश्रोत्रियशक्रगोपादयः स्वसामर्थ्यनियतमर्थमाचक्षते तथा संघाता एवैते प्रथमानुरागानन्तरादयो राजपुरुषादयश्चानपेक्षितावयवार्था यथासामर्थ्यमर्थेषु निविशन्ते । ननु चाव्यपदेश्यपूर्वापरविभागा भिन्नार्थाभिधायिनो[3] वृक्षादयः प्रतीयमानभागभेदानुयाताः संबन्धिपदार्थोपहितभेदवृत्त्यभिधायिनः पुनरिमे तत्कथं प्रथमानुरागानन्तरादयो वृक्षादिवद्रूढिशब्दा भवितुमर्हन्ति । तदसत् । रूढिशब्दा यौगिका इति विभागोऽभेददर्शनादर्शनाभ्यामभिनिविष्ट-

१. 'भवन्ति' ख. २. 'च' क.ख. ३. 'अभिन्नार्थाभिधायिनः' ग.घ. ४. 'अभिनिविशते' क.ख.

बुद्धेः प्रतिपादनोपाय एव । अपर्थाभिनिविष्टो[1] ह्ययं क्रमेण तस्मादपर्थान्निवर्तयितव्यः[2] । ततोऽस्याप्रत्यभिज्ञायमानप्रकृतयः श्रोत्रियक्षत्रियादयो दर्श्यन्ते । न ह्यत्र प्रकृतिरूपमवसीयते । यतः प्रकृत्यर्थावच्छिन्नः प्रत्ययार्थोऽभिधीयते । ततोऽनवसीयमानावयवविभागा रूढयः काश्चिदुपन्यस्यन्ते । यत्रात्यन्तमसंभवोऽवयवार्थस्य यथा—शक्रगोपाः, तैलपायिकाः, मण्डपेति[3] । पुनः कदाचित्संनिहितावयवार्था जातिविशेषाभिधायिनः सप्तपर्णकृतमालादय उदाह्रियन्ते । यतः प्रपलाशोऽप्यनुद्भिन्नपलाशोऽपि च वनस्पतिः सप्त पर्णान्यस्य पर्वणि पर्वणीति सप्तपर्ण इत्याख्यायते । तथा निःकीर्णकुसुमस्तरुरनारब्धकलिकाजालकोऽपि कृता मालानेनेति कृतमाल इत्यभिधीयते । अथ च[4] पञ्चाङ्गुलमिवाश्वकर्ण इव पर्णमस्येत्युपचरितार्थावयवा जातिवाचिन एव पञ्चाङ्गुलाश्वकर्णादयो वर्ण्यन्ते । तेषु हि पञ्चाङ्गुलादिव्यपदेशः प्रोद्भिद्यमानप्रवालमपि यावदनुवर्तते । ततः संनिधानेऽप्यनाश्रीयमाणवृत्तिपदार्था[5][6] लोहितशालिगौरखरं[7] इत्यादयो निगद्यन्ते । तत्र हि सन्नपि वर्णविशेषः समुदायस्य जातिवचनत्वाच्छब्दार्थत्वेन नावसीयते । तदेवमयं शकलीकृतवृत्तिपदार्थाभिनिवेशः प्रथमानुरागानन्तरादाविव राजपुरुषादावप्यवयवाभिनिवेशं शक्यते त्याजयितुम् । अत एव प्रथमानुरागादीनां विप्रलम्भसंभोगादीनां च पारिभाषिकोऽपि संसर्गः संनिधीयत इति ॥

१. 'अयथाभिनिविष्टो' ख. २. 'अपदार्थात्' क. ३. 'मण्डप इति' क.ख. ४. 'च' क.ख.ग. नास्ति. ५. 'संनिधीयमानेऽपि' क.ख. ६. 'पदार्थाः' ख. ७. 'गौरस्वरः' ख.

प्रकीर्णकेषु स्पृहयन्तीव्रतमष्टमीचन्द्रकः । स हि चैत्रचतुर्थीतोऽष्टमचतुर्थ्यामुपादीयमानः कामिनीभिरर्च्यते । यथा—

'अवसहिअजणो पइणा सलाहमाणेण एच्चिरं हसिओ ।
चन्दो त्ति तुज्झ मुहसंमुहदिण्णकुसुमंजलिविलक्खो ॥२९८॥'

[अवशहृतजनः पत्या श्लाघ्यमानेनेयच्चिरं हसितः ।
चन्द्र इति तव मुखसंमुखदत्तकुसुमाञ्जलिविलक्षः ॥]

यस्यां यवस्तरेष्वबला लोलन्ति सा कुन्दचतुर्थी । यथा—

'लुलिआ गहवइधूआ दिण्णं व फलं जवेहिं सविसेसं ।
एण्हिं अणिवारिअमेव गोहणं चरउ छेत्तम्मि ॥ २९९ ॥'

[लुलिता गृहपतिसुता दत्तमिव फलं यवैः सविशेषम् ।
इदानीमनिवारितमेव गोधनं चरतु क्षेत्रे ॥]

वसन्तावतारदिवसः सुवसन्तको यथा—

'छणपिट्ठधूसरत्थणि महुमअतम्बच्छि कुवलआहरणे ।
कण्णकअचूअमंजरि पुत्ति तुए मंडिओ गामो ॥ ३०० ॥'

[क्षणपिष्टधूसरस्तनि मधुमदताम्राक्षि कुवलयाभरणे ।
कर्णकृतचूतमञ्जरि पुत्रि त्वया मण्डितो ग्रामः ॥]

यत्र स्त्रियो दोलामारोहन्ति सान्दोलनचतुर्थी । यथा—

'अंदोलणक्खणोट्ठिआए दिट्ठे तुमम्मि मुद्धाए ।
आसंघिज्जइ काउं करपेल्लणणिच्चला दोला ॥ ३०१ ॥'

[आन्दोलनक्षणोत्थितया दृष्टे त्वयि मुग्धया ।
आशास्यते कर्तुं करप्रेरणनिश्चला दोला ॥]

---

१. 'तस्स' ख. २. 'मुहदिण्णकुसुमं' ख. ३. 'जातविलक्खो' ख. ४. 'एहिं' ख. ५. 'सेवगोहणं' क., 'सेवग्गेहणं' ख. ६. 'चवर' क. ७. 'कस्स' ख. ८. 'आसङ्घिज्जइ' क. ९. 'काओ' क.ख. १०. 'णिच्चता' क. ख.

एकमेव कुसुमनिर्भरं[1] शाल्मलिवृक्षमाश्रित्य सुनिमीलितकादिभिः खेलतां क्रीडैकशाल्मली । यथा—

'को एसोत्ति पलोट्टुं[2] सिंवलिवलिअं[3] पिअं परिक्खसइ ।
हलिअसुअं मुद्धवहू सेअजलोल्लेण हत्थेण ॥ ३०२ ॥'

[क एष इति प्रत्यावर्तितुं शाल्मलिवलितं प्रियं परिपातयति ।
हालिकसुतं मुग्धवधूः स्वेदजलार्द्रेण हस्तेन ॥]

त्रयोदश्यां कामदेवपूजामदनोत्सवः । यथा—

'गामतरुणीओ हिअअं हरंति पोढाण[4] थणहरिल्लीओ ।
मअणूसअम्मि[5] कोसुंभकंचुआहरणमेत्ताओ ॥ ३०३ ॥'

[ग्रामतरुण्यो हृदयं हरन्ति प्रौढानां स्तनभारवत्यः ।
मदनोत्सवे कौसुम्भकञ्चुकाभरणमात्राः ॥]

गन्धोदकपूर्णवंशनाडीशृङ्गकादिभिर्यूनां प्रियजनाभिषेककर्दमेन क्रीडोदकक्ष्वेडिका । यथा—

'अह[6] धाविऊण[7] संझामएण[8] सवंगिअं पडिच्छंति ।
फग्गुमहे[9] तरुणीओ गहवइसुअहत्थचिक्खिल्लं ॥ ३०४ ॥'

[अथ धावित्वा संध्यामदेन सर्वाङ्गिकं प्रतीक्षन्ते ।
फल्गुमहे तरुण्यो गृहपतिसुतहस्तकर्दमम् ॥]

---

१. 'सुकुसुमनिर्भरं' क., 'सुकुसुमनिर्भरशाल्मलिवृक्षं' ख. २. 'पलट्टं' ख. ३. 'संवलि' क. ४. 'छेआणं' इति गाथासप्त०, 'विदग्धानाम्' इति च्छाया च. ५. 'मअणे कुसुम्भरञ्जिअकञ्चु[इ]आहरणमेत्ताओ' इति गाथासप्त०, 'मदने कुसुम्भरागयुक्तकञ्चुकाभरणमात्राः' इति च्छाया च. ६. 'अहं' ख. ७. 'धाविजण' ख. ८. 'सङ्गमएण' ख. ९. 'पग्गुमहे' क.

यत्रोत्तमस्त्रियः पादाभिघातेनाशोकं विकास्य[1] तत्कुसुममवतंसयन्ति साशोकोत्तंसिका। यथा—

'उत्तंसिऊण दोहलविअसिआसोअमिन्दुवदणाए।
विहिणो[2] णिप्फलकंकेल्लिकरणसद्दो समुप्पुसिओ॥ ३०५॥'

[उत्तंसयित्वा दोहदविकसिताशोकमिन्दुवदनया।
विधेर्निष्फलकंकोलकरणशब्दः समुत्प्रोञ्छितः॥]

यत्राङ्गनाभिश्चूतमञ्जर्योऽवरुज्यानङ्गाय बाणत्वेन[3] दायं दायमवतंस्यन्ते सा चूतभञ्जिका। यथा—

'रइअं पि ता ण सोहइ रइजोग्गं कामिणीण छणणेवच्छं।
कण्णे जा ण रइज्जई[4] कवोलघोलंतसहआरं[5]॥ ३०६॥'

[रचितमपि तावन्न शोभते रतियोग्यं कामिनीनां क्षणनेपथ्यम्।
कर्णे यावन्न रच्यते कपोलघूर्णमानसहकारम्॥]

यत्र युवतयो मदिरागण्डूषदोहदेन बकुलं विकास्य[6] तत्पुष्पाण्यवचिन्वन्ति सा पुष्पावचायिका। यथा—

'पीणथणएसु केसर दोहलदाणुम्मुहीअ णिवलंतो।
तुंगसिहरग्गपडणस्स जं फलं तं तुएँ[7] पत्तं॥ ३०७॥'

[पीनस्तनेषु केसर दोहददानोन्मुख्या निपतन्।
तुङ्गशिखराग्रपतनस्य यत्फलं तत्त्वया प्राप्तम्॥]

---

१. 'विकाश्य' क.ख.ग. २. 'विरहिणो' क.ख. ३. 'बालरागत्वेनैव' ख. ४. 'जाव ण रइज्जइ' क., 'जाव ण रज्जइ' ख. ५. 'कवोलवोणन्तपल्लवसहआरं' क.ख. ६. 'विकाश्य' क.ख.ग. ७. 'तए' क.ख.

यत्र कस्ते प्रियतम इति पृच्छद्भिः पलाशादिनवलताभिः प्रियो जनो हन्यते सा चूतलतिका। यथा—

'णवलइपहारंमंगे[1] जहिँ जहिँ महइ देअरो दाउं ।
रोमंचदंडराई तहिं तहिं दीसइ बहूए ॥ ३०८ ॥'

[नवलताप्रहारमङ्गे यत्र यत्रेच्छति देवरो दातुम् ।
रोमाञ्चदण्डराजिस्तत्र तत्र दृश्यते वध्वाः ॥]

'पञ्चाल्यनुयातं[2] भूतमातृका । यथा—

'विहलइ से णेवच्छं पम्माअइ मंडणं गई खलइ ।
भूअच्छणणच्चणअम्मि[3] सुहअ मा णं पलोएसु[4] ॥ ३०९ ॥'

[विह्वलयत्यस्या नेपथ्यं प्रम्लायते मण्डनं गतिः स्खलति ।
भूतक्षणनृत्ये सुभग मैनां प्रलोकयेः ॥]

वर्षासु कदम्बनीपहारिद्रकादिकुसुमैः प्रहरणभूतैर्द्विधा वनं[5] विभज्य कामिनीनां क्रीडाः[6] कदम्बयुद्धानि । यथा—

'सहिआहिँ पिअविसज्जिअकदंबरअभरिअणिब्भरुच्छसिओ ।
दीसइ कलंबथवओव्व थणहरो हलिअसोण्हाए ॥ ३१० ॥'

[सखीभिः प्रियविसर्जितकदम्बरजोभरितनिर्भरोच्छ्वसितः ।
दृश्यते कदम्बस्तबक इव स्तनभरो हालिकस्नुषायाः ॥]

प्रथमवर्षणप्ररूढनवतृणाङ्कुरासु स्थलीषु शाद्वलमभ्यर्च्य भुक्तपीतानां

---

१. 'णवलअपहरं' क.ख. गाथासप्त०. २. 'पञ्चाल्यनुनयन्ती' क., 'पञ्चात्मानुनयन्ती' ख. ३. 'णच्चणपाम्मि' ख. ४. 'पुलोएसु' क.ख. ५. 'दलं' क., 'बलं' ख. ६. 'क्रीडा' ख, ग.

कृत्रिमविवाहादिक्रीडा नवपत्रिका । तत्र च वरणविधानादौ तेषामेवंविधाः परिहासा भवन्ति । यथा—

'ता कुणह कालहरणं तुवरन्तम्मि वि वरे विवाहस्स ।
जाव पंडुणहवआइं होंति कुमारीअ अंगाइं ॥ ३११ ॥'

[तावत्कुरुत कालहरणं त्वरमाणेऽपि वरे विवाहस्य ।
यावत्पाण्डुनखपदानि भवन्ति कुमार्या अङ्गानि ॥]

अभिनवबिसाङ्कुरोद्भेदाभिरामं सरः समाश्रित्य कामिमिथुनानां क्रीडा बिसखादिका । यथा—

'गेण्हंति पिअअमा पिअअमाण वअणाहि विसलअद्धाइं ।
हिअआइँ वि कुसुमाउहबाणकआणेअरंधाइं ॥ ३१२ ॥'

[गृह्णन्ति प्रियतमाः प्रियतमानां वदनाद्बिसलतार्धानि ।
हृदयानीव कुसुमायुधबाणकृतानेकरन्ध्राणि ॥]

शक्रोत्सवदिवसः शक्रार्चा । यथा—

'सच्चं चअ कट्ठमओ सुरणाहो जेण हलिअधूआए ।
हत्थेहिँ कमलदलकोमलेहिँ छित्तो ण पल्लविओ ॥ ३१३ ॥'

[सत्यमेव काष्ठमयः सुरनाथो येन हालिकदुहित्रा ।
हस्तैः कमलदलकोमलैः स्पृष्टो न पल्लवितः ॥]

आश्विने पौर्णिमासी कौमुदी । यथा—

'अह तइ सहत्थदिण्णो कह वि खलंतमत्तजणमज्झे ।
तिस्सा थणेसु जाओ विलेवणं कोमुईवासो ॥ ३१४ ॥'

[अथ त्वया स्वहस्तदत्तः कथमिव स्खलन्मत्तजनमध्ये ।
तस्याः स्तनेषु जातो विलेपन कौमुदीवासः ॥]

---

१. 'तत्र' घ. २. 'विवालस्स' क. ३. 'जाव' क., 'जावं' ख. ४. 'पदुणहवआइ' ख. ५. 'इंधाइं' ख. ६. 'कट्टमओ' ख. ७. 'धोआए' क., 'धीआए' ख. ८. 'कमलदलकोमलेहिं' ग. पाठस्त्रुटितः. ९. 'आश्विन' क. ख. १०. 'महत्थदिण्णे' क. ख. ११. 'कह वि' ख. १२. 'तिण्णाथणेसु' क. १३. 'केमुईवासो' क.

दीपोत्सवो यक्षरात्रिः । यथा—

'अण्णे वि हुं[1] होंति छणा णं[2] उणो दीआलिआस[3]रिच्छा दे ।
जत्थ जहिच्छं गम्मइ पिअ[4]वसही दीव[5]अमिसेण ॥ ३१५ ॥'

[अन्येऽपि खलु भवन्ति क्षणा न पुनर्दीपालिकासदृक्षास्ते ।
यत्र यथेच्छं गम्यते प्रियवसतिर्दीपकमिषेण ॥]

[6]शमीधान्यशूकधान्यानामार्द्राणामेवाग्निपक्वानामभ्यवहारो[7]ऽभ्यूषखादिका । यथा—

'वा[8]अग्गिणा करो मे [9]दड्ढोत्ति पुणो पुणो च्चिअ [10]कहेइ ।
हलि[11]असुआ मलिअच्छुसदो[12]हली पामरजु[13]आणे ॥ ३१६ ॥'

[निर्वाणाग्निना करो मे दग्ध इति पुनः पुनरेव कथयति ।
हालिकसुता मृदितोच्छ्वासदोहदिनी पामरयूनि ॥]

प्रथमत एवेक्षुभक्षणं नवेक्षुभक्षिका । यथा—

'दिअरस्स सरअमउअं अंसूमइलेण देइ हत्थेण ।
पढमं हिअअं बहु[14]आ [15]पेच्छा गण्डं सदन्तवणं ॥ ३१७ ॥'

[देवरस्य शरन्मृदुकमश्रुमलिनेन ददाति हस्तेन ।
प्रथमं हृदयं वधूका पश्चादिक्षुं सदन्तव्रणम् ॥]

---

१. 'हि' क., 'असे वि हि' ख. २. 'ण' क.ख. नास्ति., 'छणा णो' ग. ३. 'सरिच्छो दे' क.ख. ४. 'पिअवसदी' क.ख., 'पिअवसई' घ. ५. 'दीअवमिसेण' क.ख. ६. 'शमिधान्य' ख. ७. 'अभ्युपखादिका' क., 'अभ्युषखादिका' ख. ८. 'वा अणग्गिणा' क., 'अणग्गिणा' ख. ९. 'दद्धोत्ति' क.ख. १०. 'कहेहिइ' क. ११. 'हालिअसुआ' क.ख. १२. 'दोहला' क., 'दोहसा' ख. १३. 'पामरजुवाणे' क., 'पामरजुवाणो' ख. १४. 'बहुआ' घ. १५. 'पवठ्ठा' ख.

ग्रीष्मादौ जलाशयावगाहनं तोयक्रीडा । यथा—

'पिसुणेंति कामिणीणं जललुक्कपिआवऊहण[1]सुहेल्लिं ।
कण्डइअकवोलफुल्लणिच्चलच्छीइँ वअणाइं ॥ ३१८ ॥'

[पिशुनयन्ति कामिनीनां जललीनप्रियावगूहनसुखकेलिम् ।
क[2]ण्टकितकपोलोत्फुल्लनिश्चलाक्षीणि वदनानि ॥]

नाट्या[3]दिदर्शनं प्रेक्षा । यथा—

'णच्चिहिइ णडो पेच्छिहिइ [4]जणवओ भोइओ [5]नायकः ।
सो वि दूसिहिइ [6]जइ [7]रङ्गविहडणअरी गहवइ[8]धूआ ण [9]वच्चिहिइ ॥'

[नर्तिष्यते नटः प्रेक्षिष्यते जनपदो भोगिको नायकः ।
सोऽपि दूषयिष्यति यदि रङ्गविघटनकरी गृहपतिदुहिता न व्रजिष्यति]

आलिङ्गनादिग्लहा दुरोदरादिक्रीडा[10] द्यूतानि । यथा—

'आश्लेषे प्रथमं क्रमेण विजिते [11]हृद्येऽधरस्यार्पणे
केलिद्यूत[12]विधौ पणं प्रियतमे कान्तां पुनः पृच्छति ।
सान्तर्हासनिरुद्धसंभृतरसोद्भेदस्फुरद्[13]गण्डया
तूष्णीं [14]सारिविसारणाय निहितः स्वेदाम्बुगर्भः करः ॥३२०॥'

रागोद्दीपनाय [15]माध्वीसेवा मधुपानं । यथा—

'थोआरूढमहुमआ खणपम्ह[16]ट्ठावराहदिण्णुल्लावा ।
हसिऊण संठविज्जइ पिएण संमरिअलज्जिआ कावि पिआ ३२१'

---

१. 'जललुक्कपिआवऊहहा' क., 'जललुक्काइआवऊहहा' ख. २. 'कण्ठइअकवोता पुल्ल' क., 'कण्ठइअकवोला पप्फुल्ल' ख. ३. 'नाथादिदर्शनं' ख. ४. 'जेण पओ' ख. ५. 'भोरओ' क. ६. 'जर' ख. ७. 'रङ्गविहडणअरी' ख. ८. 'गहवइधुआ' क., 'गहवरधुआ' ख. ९. 'यवच्चिहिइ' क., 'पविच्चिहिइ' ख. १०. 'दुरोदरक्रीडा' घ. ११. 'हृष्टाधरस्यार्पणे' क., 'दृष्टाधरस्यार्पणे' ख. १२. 'केलीद्यूतविधौ' क.ख. १३. 'स्फुरद्दन्तया' ख. १४. 'शारिविसारणाय' क. १५. 'माध्वीकादिसेवा' क. १६. 'पम्हुट्ठा विम्हरिया' इति धनपालपाइयलच्छीनाममाला । 'पम्हट्ट' क., 'पल्हदा' ख., 'पम्हठा' ग., 'पम्हट्ठा' घ.

[स्तोकारूढमधुमदा क्षणविस्मृतिरपराधदत्तोल्लापा ।
हसित्वा संस्थाप्यते प्रियेण संस्मृतलज्जिता कापि प्रिया ॥]

प्रेमप्रकारे विप्रियादिभिरप्यविनाशनीयो नित्यो यथा—

'दिट्ठाकुविआणुणआ पिआ सहस्सजणपेल्लणं पि विसहिअं[1] ।
जस्स णिसण्णाइ[2] उरे सिरीएँ[3] पेम्मेण लहुईओ[4] अप्पाणो ३२२'

[दृष्टा कुपितानुनया प्रिया सहस्रजनप्रेरणमपि विसोढम् ।
यस्य निषण्णयोरसि श्रिया प्रेम्णा लघूकृत आत्मा ॥]

तपश्चरणादिजन्मा नैमित्तिको यथा—

'इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः ३२३'

अनिर्धारितविशेषः सामान्यो यथा—

'कुविआओ[5] वि पसण्णाओ ओरुण्णमुहीओ[6] वि समाणीओ[7] ।
जह गहिआ तह हिअअं धारेंति अ णिव्वइं बाला ॥ ३२४ ॥'[8]

[कुपिता अपि प्रसन्ना अवरुदितमुख्योऽपि समानाः ।
यथा गृहीतास्तथा हृदयं धारयन्तीव निर्वृतिं बालाः ॥]

निर्धारितविशेषप्रकारो विशेषवान् यथा—

'णवि तह अणालवंती हिअअं दूमेइ माणिणी[9] अहिअं ।
जह दूरंविअंभिअ[10]गरुअ[11]रोसमज्झत्थभणिएहिं[12] ॥ ३२५ ॥'

---

१. 'विसहिआम्' क., 'विसहिआ' ख. २. 'णिसण्णइ' क. ३. 'सिरीअ' क. ४. 'लहुअइओ' क.ख. ५. 'कुविआअ' ख., 'कुविआओ' क.ग. ६. 'ओरुण्णमुहीओ' क., नास्ति. 'ओणामुहीओ' ख. ७. 'विसमाणीओ' इत्यादि गाथांशः—ग. त्रुटित एव. ८. ध्वन्यालोके त्वियमेव गाथैवमुदाहृता—'कुविआओ पसण्णाओ ओरुण्णमुहीओ विहसमाणाओ । जह गहिओ तह हिअअं हरन्ति उच्छिन्तमहिलाओ ॥' [कुपिताः प्रसन्ना अवरुदितवदना विहसन्त्यः । यथा गृहीतास्तथा हृदयं हरन्ति स्वैरिण्यो महिलाः ॥] इति च्छाया च. ९. 'माणिईणी' (?) क. १०. 'दूरे वि' क. ११. 'गरूअ' ख. १२. 'भणिषेण' क., 'भणिएइ' ख.

[नापि तथा नालपन्ती हृदयं दुनोति मानिन्यधिकम् ।
यथा दूरविजृम्भितगुरुकरोषमध्यस्थभणितैः ॥]

इङ्गितादिभिरप्यनवगम्यः प्रच्छन्नो यथा—

'दिअहे दिअहे सूसइ[1] संकेअभंगवड्ढिआसङ्का[2] ।
आवंडुरोवणमुही[3] कलमेण समं कलमगोवी[4] ॥ ३२६ ॥'

[दिवसे दिवसे शुष्यति संकेतकभङ्गवर्धिताशङ्का ।
आपाण्डुरावनतमुखी कलमेन समं कलमगोपी ॥]

संख्यादिभिरवगतः[5] प्रकाशो यथा—

'जइ होसि ण तस्स पिआ अणुदिअहं णीसहेहिँ[6] अंगेहिं ।
णवसूअपीअपेऊसमत्तपाडि[7] व्व किं सुवसि ॥ ३२७ ॥'

[यदि भवसि न तस्य प्रियानुदिवसं निःसहैरङ्गैः[8] ।
नवसूतपीतपीयूषमत्तमहिषीवत्सिकेव[9] किं स्वपिषि ॥]

कारणोपाधिकः कृत्रिमो यथा—

'अद्दंसणेण पुत्तअ सुट्ठु वि णेहाणुबंधंगहिआइं[10] ।
हत्थउडपाणिआइँ वि(व[11]) कालेण गलंति पेम्माइं[12] ॥ ३२८ ॥'

[अदर्शनेन पुत्रक सुष्ठ्वपि स्नेहानुबन्धगृहीतानि ।
हस्तपुटपानीयानीव कालेन गलन्ति प्रेमाणि ॥]

---

१. 'रूपई' क. 'रूसइ' ख. २. 'वट्टिआसङ्का' क. ३. आवण्डुरोणअमुही' गाथासप्त०. ४. 'गोपी' घ. ५. 'संख्यादिभिः' ख. ६. 'दीअह' क., 'अणुदिअहं' इति गाथासप्त०. पाठः, 'अनुदिवसं' इति च्छाया च. ७. 'मत्तपाडिव्व' क., 'मओपाडिव्व' ख., 'मत्तपाडिव्व' गाथासप्त० पाठः. ८. निःसहैः सुरतश्रमखिन्नैरङ्गैः. ९. पीयूषेणाभिनवदुग्धेन मत्ता पाडीव वत्सिकेव. १०. 'घडिआइं' गाथासप्त०. ११. 'व' गाथासप्त०. १२. 'वाछन्ति' क. 'वालान्ति' ख.

कारणनिरपेक्षोऽकृत्रिमो यथा—

'जह जह जरापरिणओ होइ पई दुग्गओ विरूओ वि ।
कुलपालिआंइं[1] तह तह अहिअअरं वल्लहो होइ ॥ ३२९ ॥'

[यथा यथा जरापरिणतो भवति पतिर्दुर्गतो विरूपोऽपि ।
कुलपालिकायास्तथा तथाधिकतरं वल्लभो भवति ॥]

जन्मान्तरसंस्कारजनितः सहजो यथा—

'आणिअपुलउब्भेओ[2] सवत्तिपणअपरिधूसरम्मि वि गुरुएँ[3] ।
पिअदंसणे पवड्ढइ मण्णुट्ठाणे[4] वि रुप्पिणीअ[5] पहरिसो ॥ ३३०॥'

[आनीतपुलकोद्भेदः सपत्नीप्रणयपरिधूसरेऽपि गुरुके ।
प्रियदर्शने प्रवर्धते मन्युस्थानेऽपि रुक्मिण्याः प्रहर्षः ॥]

उपचारापेक्षप्रकर्ष आहार्यो यथा—

'घरिणीअ अकइअवं[6] चटुअं[7] पिअअमे कुणंतम्मि ।
अकअत्थाइं वि जाआइ झंति[8] सिढिलाइं[9] अंगाइं ॥ ३३१ ॥'

[गृहिण्या अकैतवं चटुकं प्रियतमे कुर्वाणे सति ।
अकृतार्थानीव जायाया झटिति शिथिलान्यङ्गानि ॥]

यौवनजो यथा—

'तंबमुहकआहोआ जहँ[10] जह थणआ किलेंति कुमरीणम्[11] ।
तह तह लद्धावासोव्व वम्महो[12] हिअअमाविसइ ॥ ३३२ ॥'

१. 'कुलवालिआणँ' गाथासप्त०., 'कुलवालिआए' क.ख. २. 'पुलओब्भेओ' क.ख. ३. 'गरुए' क., 'गरूए' ख. ४. 'मम्हट्ठाणे' क. ५. 'रुम्मिणीअ' क. ६. 'कइअव्वं' क.ख. ७. 'चडुलं' क., 'बहुलं' ख. ८. 'म्हत्ति' क., 'गत्ति' ख. ९. 'सिढिलिआइं' क.ख. १०. 'जह' क. ११. 'कुमारीणं' क. १२. 'मम्महो' घ.

[ताम्रमुखकृताभोगौ यथा यथा स्तनौ क्राम्यतः कुमारीणाम्।
तथा तथा लब्धावास इव मन्मथो हृदयमाविशति॥]

उपचारानपेक्षो विस्रम्भजो यथा—

'ण वि तह छेअरआइं हरंति पुनरुत्तराअरमिआइं।
जह जत्थव-तत्थव जह व तह व सब्भावरमिआइं॥३३३॥'

[नापि तथा छेकरतानि हरन्ति पुनरुक्तरागरमितानि।
यथा यत्रैव तत्रैव यथा वा तथा वा सद्भावरमितानि॥]

प्रेमपुष्टिषु चक्षुःप्रीतिर्यथा—

'उत्पत्तिर्देवयजनाद्ब्रह्मवादी नृपः पिता।
सुप्रसन्नोज्ज्वला मूर्तिरस्याः स्नेहं करोति मे॥ ३३४॥'

मनःसङ्गो यथा—

'एषा मनो मे प्रसभं शरीरात्पितुः पदं मध्यममुत्पतन्ती।
सुराङ्गना कर्षति खण्डिताग्रात्सूत्रं मृणालादिव राजहंसी॥३३५॥'

संकल्पोत्पत्तिर्यथा—

'तं पुलईअं वि पेच्छइ तं चिअ णिज्झाइ तीअ गेण्हइ गोत्तं।
ठाइअ तस्स समअणे अण्णं वि विचिंतअम्मि सच्चिअ हिअए॥'

[तां पुलकितां प्रेक्षते तामेव निर्ध्यायति तस्या गृह्णाति गोत्रम्।
तिष्ठति तस्य समदने अन्यामपि विचिन्तयति सैव हृदये॥]

---

१. 'हृदयमित्यध्याहार्यम्'. २. 'व्युत्पत्तिः' ग. ३. 'सुरापगा' घ. ४. 'पुलइआ' ख. ५. 'पि' क.ख.ग. ६. 'तंचा' क., 'तं विअ' ख. ७. 'णिज्जाअइइ' क., 'णिज्जाअइ' ख. ८. 'घइअं तस्सा मअणे' ख. ९. 'पि' क.ख.ग. १०. 'विच्चितंअणि' ख.

प्रलापो यथा—

'अमअमअ गअणसेहर रअणीमुहतिलअ चंद दे छिवसु ।
छित्तो[1] जेहिं पिअअमो[2] ममं [3]वि तेहिं [4]चिअ करेहिं ॥३३७॥'

[अमृतमय गगनशेखर रजनीमुखतिलक चन्द्र हे स्पृश ।
स्पृष्टो यैः प्रियतमो मामपि तैरेव करैः ॥]

जागरो यथा—

'[5]तुह [6]विरहुज्जागरओ सिविणे वि [7]ण देइ दंसणसुहाइं ।
वाहेण जहालोअणविणो[8]अणं पि [9]से विहअम् ॥३३८॥'

[तव विरहोज्जागरकः स्वप्नेऽपि न ददाति दर्शनसुखानि ।
बाष्पेण यथालोकनविनोदनमप्यस्या विहतम् ॥]

कार्श्यं यथा—

'[10]अइकोवणा वि [11]सासू [12]रोआविआ [13]गअवईअ सोण्हाए ।
पाअपडणो[14]णआए [15]दोसु वि गलिएसु वलएसु ॥ ३३९ ॥'

[अतिकोपनापि श्वश्रू रोदिता गतपतिकया स्नुषया ।
पादपतनावनतया द्वयोरपि गलितयोर्वलययोः ॥]

अरतिर्विषयान्तरे यथा—

'[16]असमत्तो वि समप्पइ [17]अपरिग्गहिअलहुओ परगुणा[18]लावो ।

---

१. 'छित्तो जेहिं पि पिआ' क., 'छित्तो तें जेहि' ख. २. 'ममं' इतिगाथासप्त०. ३. 'पि' क.ख.ग. ४. 'विअ' ख. ५. 'तह' ख. ६. 'विरहुज्जागरिओ' क., 'विर-हज्जागरिओ' ख. ७. 'स' क.ख. ८. 'छोअणविलोअणं' क., 'लोअणविलोअणं' ख. ९. 'से हअं तं पि' गाथासप्त०, 'तस्या हतं तदपि' इति च्छाया च. १०. 'आइ' क.ख. ११. 'सासु' ख. १२. 'रुआविआ' क., 'रूआविआ' ख. गाथासप्त०. १३. 'गअवईए' क.ख., 'गअवइअ' घ. १४. 'पाअपडणेण माए' ग.घ. १५. 'दो-ण्हवि' ग.घ. १६. 'असमंतो वि' ख. १७. 'अपरिअग्गहिअ' क., 'अपरिगाहिअ' ख. १८. 'परगुणालाओ' क.

तस्स पिआपडिवद्धा[1] ण समप्पइ रइसुहासमत्ता वि कहा ॥३४०॥'

[असमाप्तोऽपि समाप्यतेऽपरिगृहीतलघुकः परगुणालापः ।
तस्य प्रियाप्रतिबद्धा न समाप्यते रतिसुखासमाप्तापि कथा ॥]

लज्जाविसर्जनं यथा—

'अगणिअसेसजुआणा[2] बालअ वोलीणलोअमज्जाआ ।
अह सा भमइ दिसामुहपसारिअच्छी तुह कएण ॥३४१॥'

[अगणिताशेषयुवका बालक व्यतिक्रान्तलोकमर्यादा ।
अथ सा भ्रमति दिशामुखप्रसारिताक्षी तव कृतेन ॥]

व्याधिर्यथा—

'अण्णह[3] ण तीरइ च्चिअ परिवड्ढंतअगरुअसंतावं[4] ।
मरणविणोएण विणा विरमावेउं विरहदुक्खम् ॥ ३४२ ॥'

[अन्यथा न शक्यत एव परिवर्धमानगुरुकसंतापम् ।
मरणविनोदेन विना विरमयितुं विरहदुःखम् ॥]

उन्मादो यथा—

'अवलंबह मा संकह[5] ण इमा गहलंघिआ परिब्भमइ ।
अत्थक्कगज्जिउब्भंत[6]हित्थहिअआ पहिअजाआ ॥ ३४३ ॥'

[अवलम्बध्वं मा शङ्कध्वं नेयं ग्रहलङ्घिता परिभ्रमति ।
आकस्मिकगर्जितोद्भ्रान्तत्रस्तहृदया पथिकजाया ॥]

मूर्च्छा यथा—

'जं मुच्छिआ ण अ सुओ कलंबगंधेण तं गुणे पडिअं ।
इअरह गज्जिअसद्दो जीएण विणा ण बोलिंतो ॥ ३४४ ॥'

---

१. 'पडिवद्धा' ग.घ. २. 'सेसजुअणा' क., 'सेसजुआणो' ख. ३. 'असाहण' ख. ४. 'गअगरुअसंतापं' घ., 'गरुअसंलावं' क.ख., 'गरुअं पिअअमस्स' इति गाथासप्त०. ५. 'मां संकरुणरसगाह' ख. ६. 'गज्जिअ उत्तन्त' क.ख.

[यन्मूर्च्छिता न च श्रुतः कदम्बगन्धेन तद्गुणे पतितम् ।
इतरथा गर्जितशब्दो जीवेन विना न व्यतिक्रामेत् ॥]

मरणं यथा—

'अज्ज[1] वि ताव एक्कं मा[2]मं वा[3]रेहि पिअसहि रुअंतिम् ।
कल्लिं [4]उण तम्मि गए जइ ण मरिस्सं ण रोइस्सम् ॥ ३४५ ॥'

[अद्यापि तावदेकं मा मां वारय प्रियसखि रुदन्तीम् ।
कल्ये पुनस्तस्मिन् गते यदि न मरिष्यामि न रोष्यामि ॥]

ता इमा विप्रलम्भजन्मानो द्वादशापि प्रेमपुष्टिभूमयः संभोगेषु स्वानुरूपामेव प्रेमप्रकर्षभूमिकामास्कन्दयन्ति ॥

नायकेषु कथाव्यापी नायको यथा—

'गुरोः शासनमत्येतुं न शशाक स राघवः ।
यो रावणशिरश्छेदकार्यभारेऽप्यविक्लवः ॥ ३४६ ॥'

प्रतिनायको यथा—

'जेतारं लोकपालानां स्वमु[5]खैरर्चितेश्वरम् ।
रामस्तुलितकैलासमरातिं बह्वमन्यत ॥ ३४७ ॥'

उपनायको यथा—

'स हत्वा वालिनं वीरं[6] तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥ ३४८ ॥'

---

१. 'अज्जं पि' क.ख. गाथासप्त०. २. 'मासं' क.ख. ३. 'वारेह' क., 'धारेह' ख. ४. 'पहिऊण' क.ख., 'जइ ण मुआ ता ण रोइस्सम्' गाथासप्त०. अत्रत्यसाहित्याचार्यभट्टमथुरानाथशास्त्रिविरचितासु छायार्यासु तु—'अद्यैव तावदेकं मा रुदतीं निवारयस्वालि । कल्ये गते तु तस्मिन् न हि रोदिष्यामि यदि न मृता ॥'. ५. 'तैर्मुखैः' क. ६. वीरः' इति S. P. Pandit M. A. संपादिते रघुवंशे.

अनुनायको यथा—

'स मारुतसुतानीतमहौषधिहृतव्यथः ।
लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ॥ ३४९ ॥'

कथाव्यापिनी नायिका यथा—

'तीए सविसेसदूनिअसवत्तिहिअआइ णिव्वलंतसिणेहं ।
पिअगरुइआइ णिमिअं सोहग्गगुणाण अग्गभूमीअ पअं ॥३५०॥'

[तया सविशेषदूनितसपत्नीहृदयया निर्वर्त्यमानस्नेहम् ।
प्रियगुरूकृतया निर्मितं सौभाग्यगुणानामग्रभूम्यां पदम् ॥]

प्रतिनायिका यथा—

'तं[3] तिअसकुसुमदामं हरिणा णिम्महिअसुरहिगंधामोअं ।
अप्पणइअं पि दूमिअपणइणिहिअएण रुप्पिणीअ विइण्णम् ३५१'

[तत्त्रिदशकुसुमदाम हरिणा निर्गच्छत्सुरभिगन्धामोदम् ।
आत्मनानीतमपि दूनितप्रणयिनीहृदयेन रुक्मिण्यै वितीर्णम् ॥]

उपनायिका यथा—

'देवीस्वीकृतमानसस्य नियतं स्वप्नायमानस्य मे
तद्गोत्रग्रहणादियं सुवदना यायात्कथं न व्यथाम् ।
इत्थं यन्त्रणया कथं कथमपि क्षीणा निशा जाग्रतो
दाक्षिण्योपहतेन सा प्रियतमा स्वप्नेऽपि नासादिता ३५२'

अनुनायिका यथा—

'श्लाघ्यानां गुणिनां धुरि स्थितवति श्रेष्ठान्ववाये त्वयि
प्रत्यस्तव्यसने महीयसि परं प्रीतोऽस्मि जामातरि ।

१. 'स मारुतिसमानीत' इति मुद्रिते रघुवंशे. २. 'णिव्वरणेन्तसिणेहं' क. 'णिव्वरणन्तसिणेतं' ख. ३. 'जं' ख. ४. 'दूम्मिअ' क. ५. 'पणइ पि' क.ख. ६. 'विअइण्णं' ग. ७. Dr.R.G.Bhandarkar संपादिते मालतीमाधवे तु 'श्रेष्ठान्वये च त्वयि' इति पाठः.

तेनेयं मदयन्तिकाद्य भवतः प्रीत्यै भवत्प्रेयसे[1]
मित्राय प्रथमानुरागघटिताप्यस्माभिरुत्सृज्यते ॥३५३॥'

आभासेषु नायकाभासो यथा—

'कह[2] मा छिज्जउ मज्झो इमीअ कंदोट्टदलसरिच्छेहिं ।
अच्छीहिं जो ण दीसइ घणथणहररुद्धपसरेहिं ॥ ३५४ ॥'

[कथं मा क्षीयतां मध्य एतस्या नीलोत्पलदलसदृशाभ्याम् ।
अक्षिभ्यां यो न दृश्यते घनस्तनभररुद्धप्रसराभ्याम् ॥]

नायिकाभासो यथा—

'कृतसीतापरित्यागः स रत्नाकरमेखलाम् ।
बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् ॥ ३५५ ॥'

उभयाभासो यथा—

'अवऊहिअपुव्वदिसे समअं[3] जोण्हाए सेविअपओसमुहे[4] ।
माइ ण झिज्जउ रअणी[5] वरदिसाइतपच्छिअम्मि मिअङ्के ३५६'

[अवगूहितपूर्वदिशे समकं ज्योत्स्नया सेवितप्रदोषमुखे ।
मातर्न क्षीयते रजनी अपरदिशाभिमुखप्रस्थिते मृगाङ्के ॥]

तिर्यगाभासो यथा—

'ओरत्तपङ्कअमुहिं वम्महणडिअं[6] व सलिलसअणणिसण्णं ।
अल्लिअइ तीरणलिणिं वाआइ गमेइ सहचरिं[7] चक्काओ[8] ३५७'

[उपरक्तपङ्कजमुखीं मन्मथनटितामिव सलिलशयननिषण्णाम् ।
आलिङ्गति तीरनलिनीं वाचा गमयति सहचरीं चक्रवाकः ॥]

---

१. 'तव प्रेयसे' मुद्रिते मालतीमाधवे. २. 'कहण्ण मा झिज्जउ' क., 'कहं ण हिज्जउ' ख. ३. 'समयं' क. ४. 'पओसं मुहे' क.ख. ५. 'अरणी' क.ख. ६. 'वह्म-हणादिअं' क., 'बह्मणदिअं' ख. ७. 'सहवरिं' क. ८. 'वक्काओ' क.ख.

नायकेषु सर्वगुणसंपद्योगादुत्तमः । स यथा—

'रामोऽयं जगतीह विक्रमगुणैर्यातः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।
बन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्भूतैः स्वरैः सप्तभिः ३५८'

पादोनगुणसम्पद्योगान्मध्यमो यथा—

'किं नो व्याप्तदिशां प्रकम्पितभुवामक्षौहिणीनां फलं
किं द्रोणेन किमङ्गराजविशिखैरेवं यदि क्लाम्यसि ।
[1]जीवद्भ्रातृशतस्य मे भुजबले[2]च्छायां सुखामाश्रिता
त्वं दुर्योधनकेसरीन्द्रगृहिणी शङ्कास्पदं किं तव ॥३५९॥'

अर्धगुणसम्पद्योगात्कनिष्ठो यथा—

'एकस्मिञ्शयने मया मयसुतामालिङ्ग्य निद्रालसा[3]-
मुन्निद्रं शयितेन मच्चरणयोः संवाहनव्यापृता ।
पादाग्रेण तिलोत्तमा स्तनतटे सस्नेहमापीडिता
हर्षावेगसमर्पितानि पुलकान्यद्यापि नो मुञ्चति ॥ ३६० ॥'

सत्त्वप्रधानः सात्त्विको यथा—

'शक्त्या वक्षसि मग्नया सह मया मूढे प्लवङ्गाधिपे
निद्राणेषु च विद्रवत्सु कपिषु प्राप्तावकाशे द्विषि ।
मा भैष्टेति निरुन्धतः कपिभयं तस्योद्भटभ्रूस्थिते-
र्मर्मच्छेदविसंष्ठुलाक्षरजडा वाचस्त्वया न श्रुताः ३६१'

---

१. नि. सा. मुद्रिते वेणीसंहारे तु—'भीरु भ्रातृशतस्य या भुजघनच्छाया सुखो-पास्थिता' इति पाठः. २. 'भुजवनच्छायां' क. ३. 'निद्राशयां' ख.

रजःप्रधानो राजसो यथा—

'सामन्तमौलिमणिरञ्जितशासनाङ्क-
मेकातपत्रमवनेर्न तथा प्रभुत्वम् ।
अस्याः सखे चरणयोरधिगम्य सम्य-
गाज्ञाकरत्वमहमद्य यथा कृतार्थः ॥ ३६२ ॥'

तमःप्रधानस्तामसो यथा—

'तपो वा शस्त्रं वा व्यपदिशति[1] यः कश्चिदिह वः
स दर्पादुद्दामद्विषमसहमानः कलयतु[2] ।
अरामां निःसीरध्वजदशरथीकृत्य वसुधा[3]-
मतृप्तस्तत्कुल्यानपि[4] परशुरामः शमयति ॥ ३६३ ॥'

अनेकजातिः साधारणो यथा—

'स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु-
र्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च ।
इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः ॥ ३६४ ॥'

अनन्यजानिरसाधारणो यथा—

'आविवाहसमयाद्गृहे वने शैशवे तदनु यौवने पुनः ।
स्वापहेतुरनुपासितो[5]ऽन्यया रामबाहुरुपधानमेष ते ॥ ३६५ ॥'

अहंकारप्रधानो धीरोद्धतो यथा—

'चक्रं वा मधुहा कृतान्तगृहिणीदन्ता[6]ग्रपञ्चाङ्गुलं
वज्रं भूधरपक्षशोणितसुरापानोन्मदं वा वृषा ।

---

१. मुद्रिते महावीरचरिते तु 'व्यवहरति' इति पाठः. २. 'उद्दामं द्विषमसहमानं' क., 'उद्दामस्त्विषमसहमानः स्खलयतु' इति च मुद्रिते वीरचरिते. ३. 'जगतीं' इति मुद्रिते वीरचरिते. ४. 'तत्कुल्यामपि' क., 'तत्कल्पामपि' ख. ५. 'अनुपाश्रितोऽन्यया' इति मुद्रित उत्तररामचरिते. ६. 'कृतान्तगृहिणां' ख.

शूलं वासुररक्तबिन्दुनिचितं गृह्णातु शूलायुधो
धृष्टद्युम्नमहं निहन्मि समरे कश्चित्परित्रायताम् ॥ ३६६ ॥'

इत्युपचारप्रधानो धीरललितो यथा—

'आधातुं विनयं निरागसि नरे कुप्यन्तु नामेश्वरा-
स्तेन स्वाशयशुद्धिरेव सुकरा प्रायः प्रभूणां पुरः ।
मिथ्यामानिनि मन्यसे यदि तदा नित्यं मनोवर्तिनी
ध्याता तामरसाक्षि चित्रपटके का वा त्वदन्या मया ॥३६७॥'

उपशमप्रधानो धीरप्रशान्तो यथा—

'कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।
प्रकृतिसुभगा ह्येते भावा मदस्य च हेतवो
व्रजति पुरुषो यैरुन्मादं त एव तवाङ्कुशाः ॥ ३६८ ॥'

विस्रब्धोदारकर्मा धीरोदात्तः । स यथा—

'कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यञ्शृण्वन्रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥ ३६९ ॥'

कैतवप्रधानः शठो यथा—

'दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः ।

---

१. 'शूलं चासुर' ख. २. 'चित्रफलके' क., 'चित्तफलके' ख. ३. 'धीरशान्तो' घ. ४. 'ह्यन्ते' ख. ५. 'नवाङ्कुशाः' क.ख. ६. 'विश्रब्धोदारकर्मा' क., 'विस्रब्धदारकर्मा' ख.

ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥ ३७० ॥'

कृतापराधोऽप्यविलक्षो धृष्टो यथा—

'शतं वारानुक्तः प्रियसखि वचोभिः स परुषैः
सहस्रं निर्धूतः पदनिपतितः पार्ष्णिहतिभिः ।
कियेत्कृत्वो[1] बद्धाः पुनरिह न वेद्मि भ्रुकुटय-
स्तथापि क्लिश्यन्मां क्षणमपि न धृष्टो विरमति ॥ ३७१ ॥'

हृदयंगमप्रवृत्तिरनुकूलो यथा—

'मुञ्च कोपमं[2]निमित्तकोपने सन्ध्यया प्रणमितोऽस्मि नान्यया ।
किं न वेत्सि सहधर्मचारिणं चक्रवाकसमवृत्तिमात्मनः ॥३७२॥'

औपरोधिकप्रवृत्तिर्दक्षिणो यथा—

'अनेन कल्याणि मृणालकोमलं व्रतेन गात्रं ग्लपयस्यकारणम् ।
प्रसादमाकाङ्क्षति यस्तवोत्सुकः स किं त्वया दासजनः प्रसाद्यते ॥'

नायिकागुणेषु सर्वगुणसंपद्योगादुत्तमा यथा—

'हसिआइं समंसलकोमलाइं वीसंभकोमलं वअणं ।
सब्भाँ[3]वकोमलं पुलइअं च णमिमो सुमहिलाणं ॥ ३७४ ॥'

[हसितानि समांसलकोमलानि विस्रम्भकोमलं वचनम् ।
सद्भावकोमलं प्रलोकितं च नमामः सुमहिलानाम् ॥]

पादोनगुणसंपद्योगान्मध्यमा यथा—

'णिअदइअदंसणुक्खित्त पहिअ अणेन वच्चसु पहेण ।
गहवइबे[4]हुआ दुं[5]लंघिअवाउरा इह ग्गा[6]मे ॥ ३७५ ॥'

---

१. 'कियत्कृत्वा' ख. २. 'मानं' ख. ३. 'सब्भावकोमलपुलाइअं' क., 'सब्भाव-कोमच्छपुलाइअं व' ख. ४. 'गहवइहहूआ' ख. ५. 'दुल्लङ्घिवाउरा हअ इह ग्गामो' क., 'दुल्लङ्घिवाउदाहअप इह ग्गामो' ख. ६. 'इहअ ग्गामे' घ.

अर्धगुणसंपद्योगादधमा यथा—

'तं[1] किर खणा विरज्जसि तं किर उवहं[2]ससि सअलं[3]महिलाओ।
एहेहि वारवालिइ अंसूं[4] मइलं समुप्पिसिं[5]मो ॥ ३७६ ॥'

[त्वं किल क्षणाद्विरज्यसे त्वं किलोपहससि सकलमहिलाः।
एह्येहि वारपालिके अश्रु मलिनं समुत्प्रोञ्छामः ॥]

वयःकौशलाभ्यामसंपूर्णा मुग्धा यथा—

'सहिआहिँ भण्णमाणा थणए लग्गं कुसुंमपुप्फं[6] त्ति।
मुद्धबहुँ[7]आ हसिज्जइ पप्फोडंती णहवआइं ॥ ३७७ ॥'

[सखीभिर्भण्यमाना स्तने लग्नं कुसुम्भपुष्पमिति।
मुग्धवधूका हस्यते प्रस्फोटयन्ती नखपदानि ॥]

वयसा परिपूर्णा मध्यमा यथा—

'पडिवक्खमण्[8]णुउंजे लावण्[9]णउडे अणंगगअकुं[10]म्भे।
पुरिससअहिअअधरिए कीस थणंती थणे वहसि ॥३७८॥'

[प्रतिपक्षमन्युपुञ्जौ लावण्यपुटावनङ्गगजकुम्भौ।
पुरुषशतहृदयधृतौ किमिति स्तनन्ती स्तनौ वहसि ॥]

वयःकौशलाभ्यां संपूर्णा प्रगल्भा यथा—

'खिण्[11]णस्स ठवेइ [12]उरे पइणो गिम्हावरण्हरमिअं[13]स्स।
ओल्लं गलन्तउ[14]प्फं ण्हणसुअन्धं चिउरभारम् ॥ ३७९ ॥'

[खिन्नस्य स्थापयत्युरसि पत्युर्ग्रीष्मापराह्णरमितस्य।
आर्द्रं गलत्कुसुमं स्नानसुगन्धं चिकुरभारम् ॥]

---

१. 'तकिं खण' ख. २. 'उवहरसि' घ. ३. 'अलमहिलाओ' क.ख. ४. 'अंसू-मइमलं' क.ख. ५. 'समुप्पिसिओ' ख., 'समुप्पुसिमो' घ. ६. 'लग्गकुम्भपुप्पुति' ख. ७. 'मुद्धवहूआ' ख. ८. 'मण्णुपुञ्जे' गाथासप्त०, 'मण्णुउडे' क., 'मत्तउजे' ख. ९. 'लावसउदे' ख. १०. 'अणङ्गअकुम्भ' ख. ११. 'खिण्णस्स उरे पइणो ठवेइ' गाथासप्त० १२. 'ठवेइउ पइणो' क., 'वचेइर पइणो' ख. १३. 'गिम्हावरणहरणमि-अस्स' ख. १४. 'गलन्तकुसुमं' इति गाथासप्त०.

यत्नापनेयमाना धीरा यथा—

'ण वि तह अणालवंती हिअअं दूनेइ माणिणी अहिअम्[1] ।
जह[2] दूरविअम्भिअ[3]गरुअ[4]रोसमज्झत्थभणिएहिं ॥ ३८० ॥'

[नापि तथानालपन्ती हृदयं दुनोति मानिन्यधिकम् ।
यथा दूरविजृम्भितकरोषमध्यस्थभणितैः ॥]

अयत्नापनेयमानाऽधीरा[5] यथा—

'अवलंबिअमाणपरंमुहीअ[6] एंतस्स[7] माणिणि पिअस्स ।
पुट्ठि[8]पुलउग्गमो तुह कहेइ संमुहट्ठिअं[9] हिअअं ॥ ३८१ ॥'

[अवलम्बितमानपराङ्मुख्या आगच्छतो मानिनि प्रियस्य ।
पृष्ठपुलकोद्गमस्ते कथयति संमुखस्थितं हृदयम् ॥]

आत्मीया स्वा यथा—

'घरिणीअं[10] महाणसकम्मलग्गमसिमलिइएण[11] हत्थेण ।
छित्तं मुहं हसिज्जइ चंदावत्थं गअं पइणा[12] ॥ ३८२ ॥'

[गृहिण्या महानसकर्मलग्नमलिनितेन हस्तेन ।
स्पृष्टं मुखं हस्यते चन्द्रावस्थां गतं पत्या ॥]

परकीयान्यदीया यथा—

'वइविवरणिग्गअदलो एरण्डो[13] साहइव्व[14] तरुणाणं ।
एत्थ घरे हलिअवहू एद्दहमेत्तत्थणी वसइ ॥ ३८३ ॥'

---

१. 'हिअअम्' क. २ 'जइ' घ. ३. 'दूरे विअम्हिअ' क., 'दूरविअम्हिअ' ग.घ., 'दूरे विअमिअ' ख. ४. 'गरूअ' ख. ५. 'यत्नापनेयमानाऽधीरा' घ., 'अयत्नापनेयमाना धीरा' ग., 'अयत्नापनेयमानाऽधीरा' क. ख., 'अपलायनेऽपमानाऽधीरा' इति, एवं प्रथमेऽपि भेदे 'पलायनेऽपमाना धीरा' इति. ६. 'परम्मुहीए' इति गाथासप्त०. ७. 'त एतस्स' ख. ८. 'पुट्ठ' गाथासप्त०. 'पुट्ठि पुलगामो' ख. ९. 'संमुहठिअं' इति गाथासप्त०. १०. 'घरिणीए' क.ख. गाथासप्त०. ११. 'मसिमइलेण' क.ख. १२. 'गअ पइण' क., 'गइ पइणा' ख. १३. 'एरण्णो' क., 'एरणो' ख. १४. 'साहइव्व' क.

[वृतिविवरनिर्गतदल एरण्डः साधयतीव तरुणेभ्यः।
अत्र गृहे हालिकवधूरेतावन्मात्रस्तनी वसति ॥]

पाणिगृहीता ऊढा यथा—

'बा[1]लत्तणदुल्ललिआए अज्ज अणज्जं कअं णववहूए।
भा[2]आमि घरे एआइ[3]णि त्ति णि[4]ंतो पई रुद्धो ॥ ३८४ ॥'

[बालत्वदुर्ललितयाद्य अनार्यं कृतं नववध्वा।
बिभेमि गृहे एकाकिनीति निर्यन् पती रुद्धः ॥]

अनूढा कुमारी यथा—

'कस्स करो बहुपुण्णफलेक्कतरुणो तुहं [5]विसिम्मिहिइ।
थणपरिणाहे मम्महणिहाणकल[6]सो व पा[7]रोहो ॥ ३८५ ॥'

[कस्य करो बहुपुण्यफलैकतरोस्तव विश्रमिष्यति।
स्तनपरिणाहे मन्मथनिधानकलश इव प्ररोहः ॥]

प्रथमोढा ज्येष्ठा यथा—

'पणअं प[8]ढमपिआए रक्खि[9]उकामो वि म[10]हुरमहुरेहिं।
छे[11]अवरो विण[12]डिज्जइ अहिणवबहु[13]आविलासेहिं ॥ ३८६ ॥'

[प्रणयं प्रथमप्रियाया रक्षितुकामोऽपि मधुरमधुरैः।
छेकवरः सुखायतेऽभिनववधूकाविलासैः ॥]

---

१. 'बलत्तण' ख. २. 'आभा (भाआ?) मि' ख. ३. 'एआइणि वि' ख. ४. 'णित्तो' क.ख. ५. 'णिसम्मिहिइ' क.ख., 'णिसिम्मिहिइ' ग.घ., 'विसम्मिहइ' गाथासप्त०. ६. 'णिहाणकलसोव्व' ग.. ७. 'पारोहे' क.ख.ग.घ., 'निधानकलसेव्व पारोहो' इति गाथासप्त० पाठः. ८. 'उपणअं' क., 'उपणअं पणअं' ख. ९. 'रक्खिन(उ?) कामो वि महुरेहिं' क. १०. 'मधुरमधुरेहिं' ख., 'महुरमहुरेहि' ग.घ. ११. 'च्छेआवरो' ख. १२. 'विणलिज्जइ' क.ख. १३. 'अहिणवबहूआ' ख.

पश्चादूढा कनीयसी यथा—

'उट्टन्तमहारम्भे थणए[1] देट्ठूण[2] मुद्धवहुआए[3] ।
ओसण्ण[4]कवोलाए णीससिअं पढमघरिणीए ॥ ३८७ ॥'

[उत्तिष्ठन्महारम्भौ स्तनकौ दृष्ट्वा मुग्धवध्वाः ।
अवसन्नकपोलया निःश्वसितं प्रथमगृहिण्या ॥]

अहंकारर्द्धिरुद्धता यथा—

'अण्णमहिलापसंगं दे देव[5] करेसु अम्ह दइअस्स[6] ।
पुरिसा एक्कंतरसा[7] ण हु दोसगुणे विआणंति ॥ ३८८ ॥'

[अन्यमहिलाप्रसङ्गं हे देव कुर्वस्माकं दयितस्य ।
पुरुषा एकान्तरसा न खलु दोषगुणौ विजानन्ति ॥]

गूढमानर्द्धिरुदात्ता यथा—

'जाणइ[8] जाणावेउं अणुणअविहुरीअमाणपरिसेसं[9] ।
रइं[10]विक्कमम्मि विणआवलंबणं स च्चिअ कुणन्ती[11] ॥ ३८९ ॥'

[जानाति ज्ञापयितुमनुनयविधुरितमानपरिशेषम् ।
रतिविक्रमे विनयावलम्बनं सैव कुर्वन्ती ॥]

निर्वाण[12]माना शान्ता यथा—

'जइआ पिओ ण दीसइ भणह हला कस्स कीरए माणो ।
अह दिट्ठम्मि[13] वि माणो ता तस्स पिअत्तणं कंतो[14] ॥ ३९० ॥'

---

१. 'महारम्भत्थणए' ख. २. 'इट्टूण' ख. ३. 'मुद्धवहूआए' ख. ४. 'ओसिण्ण' क., 'ओसिण' ख. ५. 'दै देक्क' क., 'दे देक्क' ख., 'दे देव्व' घ. ६. 'दरअस्स' क. ७. 'एकतरस्स' ख. ८. 'जाणाइ' क. ९. 'अणुणअविद्दविअमाणपरिसेसं' गाथासप्त०, 'अनुनयविद्रावितमानपरिशेषम्' इति च्छाया च; 'विहीणरीअमाणपरिसेसं' क. १०. 'अइरिक्कम्मि वि' इति गाथासप्त०, 'विजनेऽपि' इति च्छाया च । अथ च तत्र 'पइरिकशब्दोऽतिरिक्ते पइरिक्केति विजने देशीति केचित् । तदा 'पइरिक्कम्मि वि' इति पाठः । विजनेऽपीत्यर्थः' इति कुलबालदेवः. ११. 'पङ्कुणन्ती' क. १२. 'निर्विण्णमाना' क.ख. १३. 'दिउम्मि' क. १४. 'कंसो' क., 'कन्तो' ख.

[यदा प्रियो न दृश्यते भणत हला कस्य क्रियते मानः।
अथ दृष्टेऽपि मानस्तत्तस्य प्रियत्वं कुतः॥]

श्लाघनीयमाना ललिता यथा—

'हसिएहिँ उवालंभा अच्चुवआरेहिँ रूसिअवाइं।
अंसूहिँ भंडणाहिं एसो मग्गो सुमहिलाणं॥ ३९१॥'

[हसितैरुपालम्भा अत्युपचारै रूषितव्यानि।
अश्रुभिः कलहा एष मार्गः सुमहिलानाम्॥]

अनियतानेकोपभोग्या सामान्या यथा—

'कडुए धूमंधारे अब्भुत्तणमग्गिणो समप्पिहिइ।
मुहकमलचुंबणलेहलम्मि पासट्ठिए दिअरे॥ ३९२॥'

[कटुके धूमान्धकारेऽभ्युत्तेजनमग्नेः समाप्स्यते।
मुखकमलचुम्बनाभिलाषिणि पार्श्वस्थिते देवरे॥]

पत्यन्तरं प्राप्ता पुनर्भूर्यथा—

'मयेन निर्मितां लब्ध्वा लङ्कां मन्दोदरीमपि।
रेमे मूर्तां दशग्रीवलक्ष्मीमिव विभीषणः॥ ३९३॥'

आत्मच्छन्दा स्वैरिणी यथा—

'तह सा जाणइ पावा लोए पच्छण्णमविणअं काउम्।
जह पढमं चिअ सच्चिअ लिक्खइ मज्झे चरित्तवंतीण॥३९४॥'

१. 'अच्छवआरेहि' ख. २. 'असूइ' ख. ३. 'भण्डाइ' क. ४. 'मण्णे' क. ५. 'कडूए' क., 'कडए' ख. ६. 'धूमङ्कारे' क., 'धूमघारे' ख. ७. 'अक्कुत्तणमग्गिणो' क., 'अब्भुत्तणमागाणो' ख. ८. 'समप्पहिइ' घ. ९. 'आसत्थिए' क.ख. १०. पद्यमेतत् क. नास्ति। अथ च 'तह सा जाणइ' इत्यादिगाथात्रोदाहरणत्वेन वर्तते 'आत्मच्छन्दा स्वैरिणी यथा' इत्येतदीयावतरणिकापि नास्त्येव. 'लङ्कां लब्ध्वा' ख. ११. 'जारा' ख. १२. 'पच्छण्णाम्' ख. १३. 'कारम्' ख. १४. 'सच्चिअ' ख. नास्ति. १५. 'लिइ' क.

[तथा सा जानाति पापां लोके प्रच्छन्नमविनयं कर्तुम् ।
यथा प्रथममेव सैव लेख्यते मध्ये चरित्रवतीनाम् ॥]

कलाचतुःषष्टिविद् गणिका यथा—

'सच्छन्दरमणदंसणरसवड्ढिअगरुअवम्महविलासं ।
सुविअड्ढवेसवणिआरमिअं को वण्णिउं तरइ ॥ ३९५ ॥'

[स्वच्छन्दरमणदर्शनरसवर्धितगुरुकमन्मथविलासम् ।
सुविदग्धवेषवनितारमितं को वर्णितुं शक्नोति ॥]

रूपयौवनमात्रोपजीविनी रूपाजीवा यथा—

'अयमेव दह्यमानसरनिर्गतधूमवर्तिकाकारः ।
चिकुरभरस्तव सुन्दरि कामिजनं किंकरीकुरुते ॥ ३९६ ॥'

कुट्टमितादीनां कर्त्री विलासिनी यथा—

'सामण्णसुन्दरीणं विब्भममावहइ अविणओ च्चेअ ।
धूम च्चिअ पज्जलिआणं बहु मओ सुरहिदारूण ॥ ३९७ ॥'

[सामान्यसुन्दरीणां विभ्रममावहत्यविनय एव ।
धूम एव प्रज्वालितानां बहु मतः सुरभिदारूणाम् ॥]

यथोक्तलक्षणासु खण्डिता यथा—

'पच्चूसागअणुरत्तदेह तइलोअलोअणाणन्द ।
अण्णत्थखविअसव्वरिअ णहभूसण दिणवई णमो दे ॥३९८॥'

---

१. 'चरित्तवत्तीण' क., 'चरित्तवतीण' ख. २. 'सुविअड्ढसवेवित' क., 'सुविअड्ढवेसवाणि' ख. ३. 'पच्चूसागअ रंजितदेह पिआलोअ लोअणाणंद' इति गाथासप्त० 'प्रत्यूषागत रञ्जितदेह प्रियालोक लोचनानन्द' इति च्छाया च । अथ 'प्रत्यूषागतो द्वीपान्तरात्, पक्षे महिलान्तरावसथात् । अनुरक्तदेहः स्वभावतः, पक्षे तदङ्गसंगतकुङ्कुमादिना । त्रैलोक्यलोचनानन्द, अथ च स्त्रीलोकलोचनानन्द । अन्यत्र द्वीपान्तरे, पक्षे नायिकान्तरगृहे क्षपितशर्वरीक । नभोभूषण, पक्षे परस्त्रीदत्तनखभूषण । भास्वानिव दूरादेवाभिवन्दनीयस्त्वं न त्वभिगम्य इति टीकानिर्गलितार्थः । 'पच्चसागअणुरत्ताअवत्तं तइलोअलोअणाणन्दम्' क., 'पच्चसागअणुरताअवत्तं तइलोअलोअणाणन्द' ख. ४. 'वइ' ख.

[प्रत्यूषागतानुरक्तदेह त्रैलोक्यलोचनानन्द ।
अन्यत्रक्षपितशर्वरीक नभोभूषण दिनपते नमस्ते ॥]

कलहान्तरिता यथा—

'अह सो विलक्खहिअओ मए अहव्वाइ अगणिअप्पणओ ।
परवज्जणच्चिरीहिँ तुम्हेहिँ उवेक्खिओ जं(जें)तो ॥ ३९९ ॥'

[अथ स विलक्षहृदयो मया भव्ययागणितप्रणयः ।
परवाद्यनर्तनशीलाभिर्युष्माभिरुपेक्षितो गच्छन् ॥]

विप्रलब्धा यथा—

'अह सा तहिँ तहिँ बिअ वाणीरवणम्मि चुक्कसंकेआ ।
तुह दंसणं विमग्गइ पब्भट्टणिहाणठाणं व ॥ ४०० ॥'

[अथ सा तत्र तत्रैव वानीरवने विस्मृतसंकेता ।
तव दर्शनं विमार्गति प्रभ्रष्टनिधानस्थानमिव ॥]

वासकसज्जा यथा—

'एहिइ पिओ त्ति णिमिसं व जग्गिअं जामिणीअ पढमद्धं ।
सेसं संतावपरवसाए बरिसं ब वोलीणम् ॥ ४०१ ॥'

[एष्यति प्रिय इति निमिषमिव जागृतं यामिन्याः प्रथमार्धम् ।
शेषं संतापपरवशया वर्षमिव व्यतिक्रान्तम् ॥]

स्वाधीनपतिका यथा—

'सालोए च्चिअ सूरे घरिणी घरसामिअस्स घेत्तूण ।
णेच्छंतस्स वि पाए धुअइ हसंती हसंतस्स ॥ ४०२ ॥'

---

१. 'अहव्वाए अगहिआणुणओ' गाथासप्त० 'अभव्यया अगृहीतानुनयः' इति च्छाया च, 'अहवाइ' ग.घ. २. 'णेंतो' इति गाथासप्त० 'निर्यन्' इति च्छाया च, 'जन्तो' क., 'जेतो' ख. ३. 'च्चिअ' क.ग.घ., 'विअ' ख., 'व्विअ' इति गाथासप्त०. ४. 'चुक्कसंकेओ' क. ५.'विअग्गइ' क., 'विमागइ' ख. ६. 'निहणटाणव' क., 'मिहाणठाणाव्व' ख. ७. 'व्विअ' इति गाथासप्त०. ८. 'धुअइ' क. ख.

[सालोक एव सूर्ये गृहिणी गृहस्वामिनो गृहीत्वा ।
नेच्छतोऽपि पादौ धावति हसन्ती हसतः ॥]

अभिसारिका यथा—

'गम्मिहिसि [1]तस्स पासं मा [2]जूरसु तरुणि [3]वड्ढउ मिअंको ।
[4]दुद्धे [5]दुद्धम्मिव [6]चंदिआए को [7]पेच्छइ मुहं दे ॥ ४०३ ॥'

[गमिष्यसि तस्य पार्श्वं मा खिद्यस्व तरुणि वर्धतां मृगाङ्कः ।
दुग्धे दुग्धमिव चन्द्रिकायां कः प्रेक्षते मुखं ते ॥]

प्रोषितभर्तृका यथा—

'गिम्हे [8]दवग्गिमसिमइलिआइँ दीसंति [9]विंझसिहराइं ।
[10]आससु पउत्थवइए ण होंति णवपाउसब्भाइं ॥ ४०४ ॥'

[ग्रीष्मे दावाग्निमषीमलिनितानि दृश्यन्ते विन्ध्यशिखराणि ।
आश्वसिहि प्रोषितपतिके न भवन्ति नवप्रावृडभ्राणि ॥]

विरहोत्कण्ठिता यथा—

'अस्मिन् वर्षमहे न वर्तत इदं यत्कामदेवोत्सवे
स्थेयं पुत्रि निरन्नया तदधुना किंचिन्मुखे दीयताम् ।
इत्युक्ते जरतीजनेन कथमप्यध्वन्यवध्वा ततः
पर्यस्तेऽहनि कल्पितश्च कवलो धौतश्च [11]धाराश्रुभिः ॥ ४०५ ॥'

---

१. 'गम्महिसि' क., 'रम्मिहिसि तस्स ण संमार सूरसु' ख. २. 'झूरसु' क., सुन्दरि मा तुरअ' गाथासप्त०, 'सुन्दरिमा त्वरस्व' इति च च्छाया. ३. 'वड्ढउ' ख. ४. 'उले दुद्धम्मि वह' ख. ५. 'मिअ' इति गाथासप्त०. ६. 'चन्दिआइ' गाथासप्त०. ७. 'पेच्छाइ' क. ८. 'दवग्ग' ग.घ. ९. 'विज्झ' गाथासप्त०. १०. 'आसउ' क.ख. ११. 'धाराम्बुभिः' क.ख.

हीनपात्रेषु शकारो यथा—

'पलिच्चं ले लंबदशाकलावं पावालअं शुत्तशदेण छत्तं।
मंशं च खादुं तुह ओट्ठकाहिँ चुकुश्चकुश्चुक्कुचुकुश्चुकुंति ॥४०६॥'

[प्रतीच्छ रे लम्बदशाकलापं प्रावारकं सूत्रशतेन छन्नम्।
मांसं च खादितुं तव ओष्ठकाभ्यां चुकुश्चुकुश्चुक्कुचुकुश्चुकुंति ॥]

ललको यथा—

'कंबलिवालिएं कंत्ति कुडम्मलं-
दन्ति थिढ्ढिलुद्धिएं मइवेआलसि।
लत्तिसोवरि जेंग्गिरि तुमं
सहिं खराविदुपोप्फलि ण लेकीसि ण आगसि ॥४०७॥'

[.......................................।
.......................................॥]

अमात्यादिरादिरासनार्हः पाषण्डादिर्वा पीठमर्दः। तयोरमात्येषु माल्यवान् यथा—

'हा वत्साः खरदूषणत्रिशिरसो वध्याः स्थ पापस्य मे
हा हा वत्स विभीषण त्वमपि मे कार्येण हेयः स्थितः।

---

१. 'जदिच्छशे' इति Bombay Sanskrit Series मुद्रिते मृच्छकटिके। 'पलिश्च ले' ग., 'पलिश्च ले' घ. २. 'लम्बदशाविशालं' इति मुद्रिते मृच्छकटिके. ३. 'शुत्तशदेहिं' इति मुद्रिते मृच्छकटिके. ४. 'जुत्तं' इति मुद्रिते मृच्छकटिके, 'छत्रम्' क.ख. ५. 'खादुं' इति मुद्रिते मृच्छकटिके ख. ६. 'तह तुट्ठि कादुं' इति मुद्रिते मृच्छकटिके, 'तुह तुट्ठि कादुं' ख. ७.'चुहू चुहू चुक्कु चुहू चुहूत्ति' इति मुद्रिते मृच्छकटिके. ८. 'कंबलिवाणिणए' क., 'कंबलवाणिए' ख., 'कंबलवालिए' घ. ९. 'कन्ति' क.ख. १०. 'कुट्टंमलदन्ति' क.ख. ११. 'तुद्धिए' क.ख. १२. 'जग्गिरिक' क.ख. १३. 'पुप्फलि' ख. १४. 'लोकी' क.ख. १५. 'स्थितेः' इति मुद्रिते महावीरचरिते.

हा मद्वत्सल वत्स रावण महत्पश्यामि ते संकटं
　वत्से कैकसि[1] हा हतासि न[2] चिरं त्रीन्पुत्रकान्द्रक्ष्यसि ४०८'

पाषण्डेषु भैरवानन्दो यथा—

'दंसेमि[3] तं पि ससिणं वसुहावइण्णं[4]
　थम्भेमि तस्स वि रइस्स[5] रहं णहद्धे ।
आणेमि जक्खसुरसिद्धगणंगणाओ
　तं णत्थि भूमिवलए[6] मह जं ण सज्झम्[7] ॥ ४०९ ॥'

[दर्शयामि तमपि शशिनं वसुधावतीर्णं स्तम्भामि तस्यापि रवे रथं नभोऽर्धे । आनयामि यक्षसुरसिद्धगणाङ्गनास्तन्नास्ति भूमिवलये मम यन्न साध्यम् ॥]

**वैहासिकः क्रीडनको विश्वास्यश्च विदूषकः ।**

यथा—

'फुल्लुक्करं कलमकूरसमं वहंति
　जे सिंदुवारविडवा मह वल्लहा दे[8] ।
जे गालिदस्स महिसीदहिणो सरिच्छा
　रुंचंति मुद्धविअइल्लपसूणपुंजा ॥ ४१० ॥'

[पुष्पोत्करं कलमभक्तसमं वहन्ति ये सिन्दुवारविटपा मम वल्लभास्ते । ये गालितस्य महिषीदध्नः सदृक्षा रोचन्ते मुग्धविचकिलप्रसूनपुञ्जाः ॥]

**मान्यः कलत्रवान्भुक्तविभवो गुणवान्विटः ॥ १७० ॥**

---

१. 'नैकशि' क., 'नैकषि' ग., 'नैकपि' घ. २. 'न चिरात्' इति मुद्रिते वीरचरिते. ३. 'दसिणं' ख. ४. 'वसुहावईणं' ख. ५. 'रदस्स गई' क.ख., 'रविस्स रहं' इति च काव्यमालामुद्रितकर्पूरमञ्जर्याम्. ६. 'भूमिवलये' क. ७. 'सज्जम्' क.ख. मुद्रितकर्पूरमञ्जर्यां च. ८. 'ते किं च' Harvard Oriental Series मुद्रितायां कर्पूरमञ्जर्याम्, काव्यमालामुद्रितायां च.

स यथा—

'शकार किं प्रार्थनया प्रावारेणामिषेण[1] वा।
अकार्यवर्जं[2] मे ब्रूहि किमभीष्टं करोमि[3] ते ॥ ४११ ॥'

धात्रेयकादिश्चेटो यथा—

'चन्द्रापीडोऽथ संजातपीडः कादम्बरीं प्रति।
प्राहिणोत्स्रस्तकेयूरः केयूरकमुपस्थितम् ॥ ४१२ ॥'

पताकासु—

**स्वात्मोपयोगिन्यन्योपयोगिन्यनुपयोगिनी।**
**पताकेत्यापताकेति प्रकरीति प्रकीर्त्यते ॥ १७१ ॥**

तासु पताका हनूमान् यथा—

'दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्धनः।
यस्य वीर्येण कृतिनो वयं च भुवनानि च ॥ ४१३ ॥'

आपताकाप्रकर्यौ मारीचजटायुषौ यथा—

'रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ।
जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ॥ ४१४ ॥'

**सहजा पूर्वजागन्तुः सखीह त्रिविधोच्यते।**

तासु लवङ्गिकादिः सहजा यथा—

'उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते।
मलीमसमुखी वर्तिः प्रदीपशिखया यथा ॥ ४१५ ॥'

कामन्दक्यादिः पूर्वजा यथा—

'तथा विनयनम्रापि मया[4] मालत्युपायतः।
नीता कतिपयाहोभिः[5] सखी विस्रम्भसेव्यताम् ॥ ४१६ ॥'

---

१. 'प्रावारेण मिषेण वा' क., 'प्रावारेणामिषेण वा' घ. २. 'आकार्यवर्जं' ग. ३. 'करोति' ग. ४. 'यथा' ख. ५. 'कतिपयाहेन' Dr, R. G. Bhandarkar मुद्रिते मालतीमाधवे.

त्रिजटादिरागन्तुर्यथा—

'जाणइ सिणेहभणिअं मा रअणिअरित्ति मे जुउच्छसु वअणम् ।
उज्जाणम्मि वेणम्मि अ जं सुरहिं तं लआण घेप्पइ कुसुमं ४१७'

[जानकि स्नेहभणितं मा रजनीचरीति मे जुगुप्सस्व वचनम् ।
उद्याने वने च यत्सुरभि तल्लतानां गृह्यते कुसुमम् ॥]

नायकगुणेषु महाकुलीनत्वं पुंसो यथा—

'वासिष्ठैः सुकृतोद्भवोऽध्वरशतैरस्त्यग्निकुण्डोद्भवो
भूपालः परमार इत्यधिपतिः सप्ताब्धिकाञ्चेर्भुवः ।
अद्याप्यद्भुतहर्षगद्गदगिरो गायन्ति यस्योद्भटं
विश्वामित्रजयोर्जितस्य भुजयोर्विस्फूर्जितं गुर्जराः ॥ ४१८ ॥'

औदार्यं यथा—

'दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥ ४१९ ॥'

महाभाग्यं यथा—

'दोर्निष्पेषविशीर्णवज्रशकलप्रत्युप्तरूढव्रण-
ग्रन्थ्युद्भासिनि भग्नमोघमघवन्मातङ्गदन्तोद्यमे ।
भर्तुर्नन्दनदेवताविरचितस्रग्दाम्नि भूमेः सुता
वीरश्रीरिव तस्य वक्षसि जगद्वीरस्य विश्राम्यतु ॥ ४२० ॥'

---

१. 'जउच्छसे' घ. २. 'वणिम्मि' क. ३. 'गेण्हइ' काव्यमालामुद्रिते सेतुबन्धे. ४. 'गूर्जराः' ग.घ. ५. 'साध' ग.घ. ६. 'यत्रैव' क. ७. 'द्राङ्' मुद्रिते महावीरचरिते.

कृतज्ञता यथा—

'कृतककुपितैर्बाष्पाम्भोभिः सदैन्यविलोकितै-
वैनमसि गता यस्य प्रीत्या धृतापि तथाम्बया ।
नवजलधरश्यामाः पश्यन्दिशो भवतीं विना
कठिनहृदयो जीवत्येव प्रिये स तव प्रियः ॥ ४२१ ॥'

रूपसंपद् यथा—

'व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः ।
आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥ ४२२ ॥'

यौवनसंपद् यथा—

'महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभावं कलभः श्रयन्निव ।
रघुः क्रमाद्यौवनभिन्नशैशवः पुपोष गम्भीरमनोहरं वपुः ॥४२३॥'

वैदग्ध्यसंपद् यथा—

'कोऽयं भामिनि भूषणं कितव ते शोणः कथं कुङ्कुमा-
त्कूर्पासान्तरितः प्रिये विनिमयः पश्यापरं क्वास्ति मे ।
पश्यामीत्यभिधाय सान्द्रपुलकौ मृद्नन्मृडान्याः स्तनौ
हस्तेन प्रतिनिर्जितेन्दुरवताद्द्यूते हसन्वो हरः ॥ ४२४ ॥'

शीलसंपद् यथा—

'का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते ।
आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ॥४२५॥'

सौभाग्यसंपद् यथा—

'असौ विद्याधारः शिशुरपि विनिर्गत्य भवना-
दिहायातः संप्रत्यविकलशरच्चन्द्रमधुरः ।

१. 'इवास्थितः' ग. २. 'क्वास्ति' ख.

यदालोकस्थाने भवति पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥ ४२६ ॥'

मानिता यथा—

'यदात्थ कामं भवता स याच्यता-
मिति क्षमं नैतदनल्पचेतसाम् ।
कथं प्रसह्याहरणैषिणां प्रियाः
परानुवृत्त्या[1] मलिनीकृताः श्रियः ॥ ४२७ ॥'

उदारवाक्यत्वं यथा—

'ख्याता[2] एव वयं जगत्सु चरितैर्वाग्भिः किमाख्यायते
संयत्तो भव शक्तिरस्ति[3] भवतः सत्यं मनुष्यो भवान् ।
शस्त्रैरव्यवधीयमानयशसः[4] प्रायो वयं तेषु चे-
त्प्राहुस्ते[5] ननु सन्ति तेऽपि गिरयो यैर्वानराः शस्त्रिणः ॥४२८'

स्थिरानुरागिता यथा—

'ततः कैरप्युक्ते परिणयविधौ काष्ठमुनिभिः
पुराणैरातङ्कग्लपितहृदयेन क्षितिभृता ।
विना वाचं नैतत्क्षम[6]मिति निधायाननमधः
पतद्बाष्पाम्भोभिर्निखिलमिव दत्तं प्रतिवचः ॥ ४२९ ॥'

नायिकागुणेषु स्त्रिया महाकुलिनता यथा—

'मानुषीषु[7] कथं वा स्यादस्य रूपस्य संभवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥ ४३० ॥'

---

१. 'परानवत्या' श्रीमत्पितृचरणसंपादिते किरातार्जुनीये. २. 'ज्ञाता' मुद्रिते महावीरचरिते. ३. 'सत्यमस्ति' मुद्रिते वीरचरिते. ४. 'विजयाः' मुद्रिते वीरचरिते. ५. 'ग्राहस्ते सुखमाश्वसन्ति' मुद्रिते वीरचरिते. ६. 'क्षपयति' ख. ७. 'मानुषीभ्यः' ख.

औदार्यं यथा—

'भ्रूभेदे[1] सहसोद्गते[2]ऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजलीकृतं[3] प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रत्ययः[4] ॥ ४३१ ॥'

महाभाग्यं यथा—

'तां नारदः कामचरः कदाचित्कन्यां किल प्रेक्ष्य पितुः समीपे ।
समादिदेशैकवधूं भवित्रीं प्रेम्णा शरीरार्धहरां हरस्य ॥ ४३२ ॥'

कृतज्ञता यथा—

'पुरिससरिसं तुह इमं रक्खससरिसं कअं[5] णिसाअरवइणा ।
कह ता[6] चिंतिज्जंतं[7] महिलासरिसं ण संपडइ मे मरणं ॥ ४३३ ॥'
[पुरुषसदृशं तवेदं राक्षससदृशं कृतं निशाचरपतिना ।
कथं तावच्चिन्तितसुलभं महिलासदृशं न संपद्यते मे मरणम् ॥]

रूपसंपद् यथा—

'आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ॥ ४३४ ॥'

यौवनसंपद् यथा—

'उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन ॥ ४३५ ॥'

वैदग्ध्यसंपद् यथा—

'एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरत-
स्तांबूलानयनच्छलेन[8] रभसाश्लेषोऽपि संविघ्नितः ।

---

१. 'भ्रूभङ्गे' मुद्रितरत्नावल्याम्. २. 'सहसा कृतेऽपि' क. ३. 'अन्तर्बाष्पजडीकृतं' ख., मुद्रितरत्नावल्यां च. ४. 'प्रत्ययः' ख. ५. 'किअं' घ. ६. 'आच्चिन्तिज्जं' क.ख. ७. 'च्चिन्तिअसुलहं' इति काव्यमालामुद्रिते सेतुबन्धे. ८. 'ताम्बूलाहरणच्छलेन' ख., काव्यमालामुद्रितेऽमरुशतके च.

आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं [1]प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥ ४३६ ॥'

शीलसम्पद् यथा—

'[2]चत्तरघरिणी पिअदंसणा अ [3]बाला पउत्थ[4]वइआ अ ।
असई [5]सअज्झिआ दुग्गआ अ ण हु खंडिअं सीलम् ॥४३७॥'

[चत्वरगृहिणी प्रियदर्शना च बाला प्रोषितपतिका च ।
असती प्रतिवेशिनी दुर्गता च न खलु खण्डितं शीलम् ॥]

सौभाग्यसम्पद् यथा—

'संचारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः ॥ ४३८ ॥'

मानिता यथा—

'शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखं कथंचित् ॥ ४३९ ॥'

उदारवाक्यत्वं यथा—

'यथा श्रुतं वेदविदां वर त्वया
जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।

---

१. 'प्रत्युपकारतः' ख. २. 'चतुरघरिणी' क.ख., 'चत्वरघरिणी' ग., 'चत्वरघरणी' घ., 'चत्तरघरिणी' च गाथासप्त०. ३. 'तरुणी' गाथासप्त०. ४. 'पउत्थपइआ' गाथासप्त०. ५. 'असइसअणणआ' क., 'असर(इ)सअज्जिआ' ख., 'असईसपज्जिआ' गाथासप्त०.

तपः किलेदं तदवाप्तिसाधनं
मनोरथानामगतिर्न विद्यते ॥ ४४० ॥'

स्थिरानुरागिता यथा—

'अलं विवादेन यथा श्रुतं त्वया[1]
तथाविधस्तावदशेषमस्तु सः ।
ममात्र भावैकरसं मनः स्थितं
न कामवृत्तिर्वचनीयमीक्षते ॥ ४४१ ॥'

पाकभक्तिषु आदावस्वादु, अन्ते स्वादु मृद्वीकापाकं यथा—

'प्राकामं दहता कृतः परिभवो येनाथ संध्यानतौ[2]
सेर्ष्या वोऽवतु चण्डिका चरणयोस्तं पातयन्ती पतिम् ।
कुर्वन्त्या[3]भ्यधिकं कृते प्रतिकृतं मुक्तेन मौलौ मुहु-
र्बाष्पैर्णा[4]हृतकज्जलेन लिखितं लक्ष्मेव चन्द्रे यथा ॥४४२'॥

आद्यन्तयोः स्वादु नारिकेलीपाकं[5] यथा—

'जह इच्छा तह रमिअं जाआ पत्ता पइं[6] गआ धूआ ।
घरसामिअस्स[7] अज्ज वि सकोउर्हल्लाइँ[8] अच्छीइं ॥ ४४३ ॥'

[यथेच्छा तथा रमितं जाया प्राप्ता पतिं गता दुहिता ।
गृहस्वामिनोऽद्यापि सकौतूहलान्यक्षीणि ॥]

आदिमध्यान्तेषु स्वादु स्वादुतरं स्वादुतममित्याम्रपाकं यथा—

'शापादसि प्रतिहता स्मृतिलोपरूक्षे[9]
भर्तर्यपेततमसि[10] प्रभुता तवैव ।

---

१. 'श्रुतस्त्वया' इति मुद्रिते कुमारसंभवे. २. 'संध्यानतः' ख. ३. 'कुर्वन्त्यभ्यधिकं' ख. ४. 'बाष्पेणाहृतकज्जलेन' इति. ५. 'नारिकेलीरीतिपाको' क., 'नारिकेलीपाकं' घ. ६. 'पदं' ख. ७. 'घरसामिअस्स अस्स' ख. ८. 'सोकोऊहछाइ अहम्' क., 'सोकोउहच्छाइ अच्छीइ' ख. ९. 'स्मृतिरोधरूक्षे' इति मुद्रिते शाकुन्तले. १०. 'भर्तुर्व्यपेततमसि' क.

छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥ ४४४ ॥'

यन्नापैति न चातिशोभते तन्नीलीरागं यथा—

'हित्वा[1] सीतां दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार ।
वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्तुः
सा दुर्वार[2]व्यथमपि परित्यागदुःखं विषेहे ॥ ४४५ ॥'

यदपैति च[3] शोभते च तत्कुसुम्भरागं यथा—

'बहुवल्लहस्स जा होइ वल्लहा कह वि पंचदिअहाइं ।
सा किं छट्ठं मग्गइ[4] कत्तो मिट्ठं[5] च बहुअं[6] च ॥ ४४६ ॥'

[बहुवल्लभस्य या भवति वल्लभा कथं कथमपि पञ्चदिवसानि ।
सा किं षष्ठं मार्गते कुतो मृष्टं च बहुकं च ॥]

यन्नापैत्यति च[7] शोभते तन्मञ्जिष्ठारागं यथा—

'वेवइ जस्स सविडिअं वलिउं महइ पुलआइअत्थणअलसं ।
पेम्मसहावविमुहिअं वीओवासगमणूसुअं[8] वामद्धम् ॥ ४४७ ॥'

[वेपते यस्य सव्रीडं वलितुं वाञ्छति पुलकाञ्चितस्तनकलशम् ।
प्रेमस्वभावविमुक्तं द्वितीयपार्श्वगमनोत्सुकं वामार्धम् ॥]

---

१. 'सीतां हित्वा' S. P. Pandit M. A. संपादिते रघुवंशे. २. 'दुर्वारं कथमपि' ख. मुद्रिते रघुवंशे च. ३. 'यदपैति न च शोभते च' क. ४. 'मग्गई' गाथासप्त०. ५. 'मिट्ठं अ' इति गाथासप्त०. ६. 'बहुअअ' इति गाथासप्त०. ७. 'यन्नापैति अपि च शोभते' ख. ८. 'वीआवासगमणूसुअं' इति काव्यमालामुद्रिते सेतुबन्धे, 'द्वितीयावकाशगमनोत्सुकं इति च्छाया च.

गूढव्यलीकमन्तर्व्याजं यथा—

'प्रत्यग्रोज्झितगोकुलस्य शयनादुत्स्वप्नमूढस्य मे
सा गोत्रस्खलनाद्पैतु च दिवा राधेति भीरोरिति।
रात्रावस्वपतो दिवा च विजने लक्ष्मीति[1] चाभ्यस्यतो
राधां प्रस्मरतः श्रियं रमयतः खेदो हरेः पातु वः ४४८'

अगूढव्यलीकं बहिर्व्याजं यथा—

'चक्षुर्यस्य तवाननादपगतं नाभूत्कचिन्निर्वृतं
येनैषा सततं त्वदेकशयनं वक्षःस्थली कल्पिता।
येनोक्तासि विना त्वया मम जगच्छून्यं क्षणाज्जायते
सोऽयं दम्भधृतव्रतः प्रियतमः कर्तुं किमप्युद्यतः[2] ॥४४९॥'

अव्यलीकं[3] निर्व्याजं यथा—

'किं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादान्मया
निद्रोच्छेद[4]विवर्तनेष्वभिमुखी नाद्यापि संभाविता[5]।
अन्यस्त्रीजनसंकथालघुरहं स्वप्ने त्वया लक्षितो[6]
दोषं पश्यसि कं[7] प्रिये परिजनोपालम्भयोग्ये मयि ॥४५०॥'

धर्मानुबन्धि धर्मोदर्कं[8] यथा—

'अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्वा यूने सितातपवारणम्।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ ४५१ ॥'

---

१. 'नामेति चाभ्यस्यता राधां०' क. २. 'किमभ्युद्यतः' क.ख., ३. 'अव्यलीकनिर्व्याजं यथा' क. ४. 'निद्रोच्छेदविवर्तनेषु' क.ख. ५. 'संभाषिता' क.ख. ६. 'वीक्षितो' क.ख. ७. 'किम्' क.ख. ८. 'धर्मोदकं' घ.

अर्थानुबन्धि अर्थोदर्कं यथा—

'भूत्वा चिराय चतुरन्त[1]महीसपत्नी
दौष्यन्ति[2]मप्रतिरथं तनयं [3]प्रसूय ।
[4]भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ ४५२ ॥'

यत्पुनः काममेवानुबध्नाति तत्कामोदर्कं यथा—

'अद्वैतं सुखदुःखयोर[5]नुगुणं सर्वास्ववस्थासु य-
द्विस्र[6]म्भो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात्परिणते [7]यत्स्ने[8]हसारे स्थितं
[9]भद्रं तस्य सुमानुषस्य कथमप्येकं हि यत्प्रा[10]प्यते ॥ ४५३ ॥'

'नानालंकारसंसृष्टेः [11]प्रकाराश्च रसोक्तयः ।'

इत्युक्तं तत्र 'अलंकारसंसृष्टेः' इतीयत्येव [12]वक्तव्ये नानालंकार[13]ग्रहणं गुणरसानामुपसंग्रहार्थम् । तेषामपि हि काव्यशोभाकरत्वेनालंकारत्वात् ॥ यदाह—

काव्यशोभाकरान्धर्मानलंकारान्प्रचक्षते ।
ते चाद्यापि विकल्प्यन्ते कस्तान्कार्त्स्न्येन वक्ष्यति ॥
काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलंक्रियाः ।
साधारणमलंकार[14]जातमन्यत् प्रदर्श्यते ॥

---

१. 'सदिगन्तमहीसपत्नी' ख. २. 'दौष्यन्तिम्' ख. ३. 'निवेश्य' इति मुद्रिते शाकुन्तले. ४. 'तत्संनिवेशितभरेण सहैव भर्त्रा' क.ख. ५. 'अनुगतं' इति मुद्रित उत्तररामचरिते. ६. 'विश्रामो' क.ख. मुद्रित उत्तररामचरिते च. ७. 'परिणतेयत्' ख.ग. ८. 'प्रेमसारे' इति मुद्रित उत्तररामचरिते. ९. 'भद्रे' घ. 'भद्र'(द्रे वा द्रं?) ग. १०. 'तत्प्रार्थ्यते' क., मुद्रित उत्तररामचरिते च । 'यत्प्रार्थ्यते' ख. ११. 'प्रकाराश्च' ख. १२. 'इत्येव' क.ख. १३. 'नानालङ्कारग्रहणं' ख. १४. 'अलङ्कारं जातमन्यत्' ख.

तत्र 'काव्यशोभाकरान्' इत्यनेन श्लेषोपमादिवद्गुणरसभावतदाभास-प्रशमादीनप्युपगृह्णाति । मार्गविभागकृद्गुणानामलंक्रियोपदेशेन श्लेषादीनां गुणत्वमिवालंकारत्वमपि ज्ञापयति—

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥
इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः ।
तेषां विपर्ययः प्रायो लक्ष्यते गौडवर्त्मनि ॥

इति श्लेषादीनां दशानामेव मार्गप्रविभागकारितां ब्रुवन्काव्यशोभाकरत्वेन गुणान्तराणामप्यलंकारत्वमुपकल्पयति ॥ तदाह, 'कस्तान्कात्स्न्र्येन वक्ष्यति' । युक्तमिदमुक्तम् । अयुक्तं त्विदमुक्तं रसानामलंकारतेति ॥

तेषां गुणानामिवालंकारव्यपदेशाभावात् । नायुक्तम् । युक्तोत्कर्षाणामूर्जस्विरसवत्प्रेयसामलंकारेषूपदेशात् । तद् यथा—

**प्रेयः प्रियतराख्यानं रसवद् रसपेशलम् ।**
**ऊर्जस्वि रूढाहंकारं युक्तोत्कर्षं च तत्त्रयम् ॥ १७२ ॥**

तत्रोर्जस्वि रूढाहंकारमित्यनेन आत्मविशेषनिष्ठस्योत्कृष्टादृष्टजन्मनोऽनेकजन्मानुभवसंस्काराहिततद्रढिम्नः संग्रामे गुणसंपदुत्पादातिशयहेतोरलंकारविशेषस्योपसंग्रहादहंकाराभिमानशृङ्गारापरनाम्नो रसस्य मानमयविकाररूपेणाभिमानिनां मनसि जाग्रतः परां कोटिमुपवर्णयति । रस-

१. 'प्रसादादीन्' ख. २. 'अनुगृह्णाति' क. ३. 'गौडवर्त्मनि लक्ष्यते' क. ४. 'मार्गप्रतिभाकारितां' क. ५. 'इति' इत्यधिकं क. ६. 'उक्तोत्कर्षाणाम्' ख. ७. 'प्रेयानामुपदेशेन' क. ८. 'उत्कृष्टजन्मनो' ख. ९. 'संस्कारा हि तद्रढिम्नः' ख. १०. 'संग्रामेण सम्पदुत्पादातिशयहेतोः' क. ११. 'अलंकारविशेषस्य' इत्यस्य स्थाने 'विशेषस्य' ख.

वद्रसपेशलमित्यनेन विभावानुभावव्यभिचारिसात्त्विकसंयोगाद्रसनिष्पत्तिरिति रत्यादिरूपेणानेकधाविर्भवतो[1]ऽभिवर्धमानस्य परप्रकर्षगामिनः शृङ्गारस्य [2]मध्यावस्थां सूचयति । प्रेयः प्रि[3]यतराख्यानमित्यनेन समस्तभावमूर्धाभिषिक्ताया रतेः परप्रकर्षा[4]धिगमाद् भावना[5]धिगमे भावरूपतामुल्लङ्घ्य प्रेमरूपेण परिण[6]ताया उपादानाद् भावान्तराणामपि परप्रकर्षाधिगमे रसरूपेण परिणतिरिति ज्ञापयन्नहं[7]कारस्योत्तरां कोटिमुपलक्षयति । सर्वेषामपि हि रत्यादिप्रकर्षाणां रतिप्रियो रणप्रियः परिहासप्रियोऽमर्षप्रिय इति प्रे[8]म्ण्येव पर्यवसानं भवति । युक्तोत्कर्षं च तत् त्रयमित्यनेनायुक्तोत्कर्षाणां त्रयाणामप्यूर्जस्विप्रभृतीनां गुणत्वमेव नालंकारत्वमित्यवस्थापयति । तथा हि—और्जित्यं भाविक[9]त्वं प्रेय इति गुणे[10]षूपदिश्यते, कुतः पुनरिदमेकदोर्जस्वि—रसवत्—प्रेयसामलंकारत्वमन्यदा[11] गुणत्वम् । उच्यते—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥

यथा गोमान् देशः, वाचालो बटुः, वाग्मी विपश्चित्, क्षीरिणो [12]वृक्षाः, बलवान् म[13]ल्लः दण्डी, गोमती [14]शालेति । तत्रोर्जस्विरसवतोरलंकारत्वविवक्षायामति[15]शायने भूम्नि वा [16]मत्वर्थीयः । गुणत्वविवक्षायां तु

१. 'विवर्धमानस्य' ग. २. 'मध्यमावस्थाम्' क.ख. ३. 'प्रे[यः प्रि?]यतराख्यानम्' क.,ख. पुस्तके 'प्रेयः' नास्ति. ४. 'परप्रकर्षाधिगमात्' इत्यस्य स्थाने 'प्रकर्षाधिगमात्' ख. ५. 'भावनाभिगमे' क.ख. ६. 'परिणतायामुपादानात्' क., 'परिणता [या] उपादानात्' ग. ७. 'ज्ञापयन्नलङ्कारस्योत्तरां' ख. ८. 'प्रेमण्येव' क., 'प्रेम्ण एव' ख. ९. भाविकं प्रेय' क.ख. १०. 'गुणेषु भण्यते' क.ख. ११. अन्यदा गुणत्वम्' क. १२. 'फलिनो वृक्षाः' क. १३. 'मन्दो' क. १४. 'शोणेति' क. १५. 'अतिशायने वा' क.ख. १६. 'मतुबर्थीयः' क.ख.

प्रशंसानित्ययोरिति योगयोरिति द्रष्टव्यम् । नित्यो हि काव्ये गुणयोग इव रसादियोगः । गुणवतो रसवतश्च निश्चितैवास्य प्रशंसा । संसर्गस्तु गुणानामवश्यमुपादानेषु । निन्दा पुनर्दोषहानेर्नावतरति । गुणेषु प्रेयं इति रूपाभेदात् कथमलंकारत्वे तदुत्कर्षप्रतीतिः । यथा 'युधिष्ठिरः श्रेष्ठतमः कुरूणाम्' इति तत्रातिशायिकान्तरेण तदवगतिरिति चेत् इहापि 'युक्तोत्कर्षं च तत्रयम्' इति वाक्यान्तरेण भविष्यति । न चातिशायिका स्वार्थातिरिक्तं किमपि ब्रुवते, अपि तु प्रकृत्युपात्तमेव प्रकर्षादिकं गमयन्ति । स्वार्थिकेषु ह्येते विधीयन्ते । एवमवस्थापिते गुणरसानामलंकारत्वे षट्प्रकारो रसालंकारसंकरः संभवति—गुणसंकरः, अलंकारसंकरः, गुणालंकारसंकरः, रससंकरः, रसगुणसंकरः, रसालंकारसंकरः इति । ननु च गुणानां संकरव्यवहारो नोपपद्यते बहुष्वपि गुणेषु गुणवदित्येव व्यपदेशात् । मैवम् । त्रिविधा गुणाः—शब्दगुणाः, अर्थगुणाः, दोषगुणाश्च । ते तु प्रत्येकं द्विधा—उल्लेखवन्तः, निरुल्लेखाश्च । तत्र शब्दगुणेषु समाधिमाधुर्यौदार्यगाम्भीर्यादयः सोल्लेखाः, श्लेषप्रसादसमतामाधुर्यादयो निरुल्लेखाः । अर्थगुणेषु प्रसादरीतिकान्त्यादयः सोल्लेखाः, अर्थव्यक्तिसौक्ष्म्यगाम्भीर्यसंमितत्वादयो निरुल्लेखाः । दोषगुणेषु ग्राम्यपुनरुक्तापार्थान्यार्थादयः सोल्लेखाः, शब्दहीनसंभ्रमापक्रमविसन्ध्यादयो निरुल्लेखाः । तत्र सजातीयानां सोल्लेखानामेवं, विजातीयानां तु निरुल्लेखानामपि संकरव्यवहारः प्रवर्तते ॥

---

१. 'दोषहानेर्न वितरति' क., 'दोषहानेन वितरति' ख. २. 'प्रेम इति' ख. ३. 'तत्रातिशायिगुणान्तरेण' क.ख. ४. 'षट्प्रकारको' क. ५. 'रसालंकारसंकरश्चेति' क.ख. ६. 'नन्वत्र' क.ख. ७. 'सौकुमार्यादयो' क.ख. ८. 'गाम्भीर्यादयो' ख. ९. 'विजातीयानां विजातीयानां तु' घ.

सजातीयानां शब्दगुणेषु समाध्यादीनां यथा—

'णवपल्लवेसु लोलइ घोलइ विडवेसु[1] वलइ सिहरेसु।
थवइ थवएसु अ तहा वसंतलच्छी असोअस्स॥ ४५५॥'
[नवपल्लवेषु लोलति घूर्णते विटपेषु वलते शिखरेषु।
स्थगति स्तबकेषु च तथा वसन्तलक्ष्मीरशोकस्य॥]

अत्रान्यधर्माणामन्यत्रारोपणं समाधिः पृथक्पदता माधुर्यं, [2]बन्धविकटत्वमुदारता, [3]ध्वनिमत्ता गाम्भीर्यमिति सजातीयाः संकीर्यन्ते। यतो वसन्तलक्ष्मीरशोकस्येति पदयोः शब्दध्वनिरपि परिस्फुरति। यथा कस्यचिदशोकस्य मानिनोऽङ्गेषु प्रियाङ्गना सविलासं चेष्टते तथास्येयमिति॥

अर्थगुणेषु[5] श्लेषादीनां यथा—

'जनः पुण्यैर्यायाज्जलधिजलभावं जलमुच-
स्तथावस्थं चैनं निदधतु शुभैः[6] शुक्तिवदने।
ततस्तां श्रेयोभिः परिणतिमसौ विन्दतु यया[7]
रुचिं तन्वन्पीनस्तनि हृदि तवायं विलुठति॥ ४५६॥'

अत्र संविधाने[8] सुसूत्रता श्लेषः, अर्थस्य प्राकट्यं प्रसादः, उत्पत्त्यादिक्रियाक्रमो रीतिः, दीप्तरसत्वं कान्तिरित्यर्थगुणाः सजातीयाः संकीर्यन्ते॥

दोषगुणेषु ग्राम्यादीनां[9] यथा—

'हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा।
हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी॥ ४५७॥'

अत्र हन्यत इत्यमङ्गलार्थम्[10], वरारोहेत्यश्लीलार्थम्, [11]हन्यते हन्यत

१. 'विलवेसु' क.ख.ग. २. 'महा' क. ३. 'बन्धविगूढत्वम्' ख. ४. 'ऽध्वनिमत्ता' घ. ५. 'अन्यार्थगुणेषु' क. ६. 'शुभे' क. ७. 'यथा' क.ख. ८. 'संविधानेषु सूत्रता' ख. ९. 'अमादीनां' क. १०. 'इत्यसङ्गतार्थम्' ख. ११. 'हन्यते' क.ख.

इति पुनरुक्तम्, चारुसर्वाङ्गीत्युक्त्वा वरारोहेति व्यर्थम्, त एते सजातीयाश्चत्वारोऽपि दोषगुणाः संकीर्यमाणाः कस्यचिदुन्मत्तभाषिणोऽनुकम्पाद्यतिशयविवक्षायामभ्यनुज्ञायन्ते ॥ यदाह—

अनुकम्पाद्यतिशयो यदि कश्चिद्विवक्ष्यते।
न दोषः पुनरुक्तादौ प्रत्युतेयमलंक्रिया॥

अर्थसजातीयानां शब्दगुणानामर्थगुणानां च संकरो यथा—

'को नाम नोदयति नास्तमुपैति को वा
लोकोत्तरः पुनरयं सविता जगत्सु।
यत्रोदयास्तमयभाजि रुचां निधाने
द्वेधा भवत्यहरिति क्षणदेति कालः॥ ४५८॥'

अत्र यावदर्थपदता संमितत्वम्, सम्यग्बन्धविकटत्वमुदारता, श्लाघ्यविशेषगुणयोग उदात्तत्वमिति शब्दगुणाः, उक्तार्थनिर्वहणं प्रौढिः, अर्थप्राकट्यं प्रसादः, रूढाहंकारतौर्जित्यमित्यर्थगुणाः संकीर्यन्ते॥

शब्दगुणानां दोषगुणानां च यथा—

'एह्येहि वत्स रघुनन्दन पूर्णचन्द्र
चुम्बामि मूर्धनि चिरं च परिष्वजे त्वाम्।
आरोप्य वा हृदि दिवानिशमुद्वहामि
वन्देऽथवा चरणपुष्करकद्वयं ते॥ ४५९॥'

अत्र भावतो वाक्यवृत्तिर्भाविकत्वम्, प्रसिद्धार्थपदता प्रसादः, प्रियार्थपदोपादानं प्रेय इति शब्दगुणाः, एह्येहीति पुनरुक्तम्, वत्से-

---

१. 'उक्तौ' क.ख. २. 'अनुकम्पाद्यतिशयं' ख. ३. 'विवक्षते' ख. ४. 'अथ सजातीयाम्' ख.घ. ५. 'सस्मितत्वम्' ख. ६. 'श्लाघ्यविशेषगुणयोग' इत्यस्य स्थाने 'विशेषगुणयोग' क.ख. ७. 'चिराय' क.ख. मुद्रिते महावीरचरिते च. ८. 'वाक्प्रतिपत्तिः' क. ख. ९. 'प्रियार्थपदोपादानम्' क.ख.

त्युक्त्वा त्वत्पादाब्जद्वयं वन्द इति विरुद्धम्, मूर्ध्नि चुम्बामि हृदि वहामीत्यादौ वन्द इति क्रियास्वनुपयोगात् पूर्णचन्द्रेतिदर्शनादिक्रियोपयोगि व्यर्थं चेति दोषगुणाः संकीर्यन्ते । रसाक्षिप्तचित्तादौ हि पुनरुक्तादयो न दुष्यन्ति ॥

अर्थगुणानां दोषगुणानां यथा—

'किं द्वारि दैवहतिके सहकारकेण
संवर्धितेन विषपादप एष पापः ।
अस्मिन्मनागपि विकासविकारभाजि
भीमा भवन्ति मदनज्वरसंनिपाताः ॥ ४६० ॥'

अत्र दीप्तरसत्वं कान्तिः, अर्थप्राकट्यं प्रसादः, उक्तार्थनिर्वहणं प्रौढिरित्यर्थगुणाः, दैवहतिके विषपादपोऽयं पाप इत्यमङ्गलार्थं ग्राम्यं, किमनेन संवर्धितेनेत्यत्र मदनज्वरसंनिपाता इत्यत्र च कृत्यप्रयोजनादेर्विरहिणो द्रष्टुरित्यादेश्चाध्याहाराद्संपूर्णवाक्यतायामर्थव्यक्तिविपर्ययः । अस्मिन्विकासविकारभाजीति विकासशब्दस्य पुष्पविषयत्वाद्वृक्षेऽपि प्रयोगोऽवाचकत्वादसमर्थ इति दोषगुणा मिथः संकीर्यन्ते । यतो रसाक्षेपात्परिहासलेशोक्त्यामङ्गलम्, प्रविश पिण्डीं द्वारं भक्षय इति न्यायात्प्रसिद्धाध्याहारः, 'दरी वदति, मञ्चाः क्रोशन्ती'ति प्रयोगदर्शनादाधाराधेययोरभेदोपचारश्च विरुद्धलक्षणादिभिः प्रयुज्यमानो न दोषायेति ॥

## अथालंकारसंकरः ।

स यद्यपि व्यक्ताव्यक्तोभयात्मतया तिलतण्डुलकादिभेदैः प्रधानाङ्गभावसमकक्षताभ्यां पुरस्तादुक्तः तथापि तेषां गुणादिसंकरासाधारण-

१. 'पूर्णचन्द्रनिदर्शनादि—' ख. २. 'दोषगुणाः परस्परं संकीर्यन्ते' क.ख. ३. 'न' ग. नास्ति.

त्वात्संप्रति साधारणः प्रकार उच्यते । स षोढा शब्दालंकारसंकरः, अर्थालंकारसंकरः, उभयालंकारसंकरः, शब्दार्थालंकारसंकरः, शब्दार्थोभयालंकारसंकरः[1], अर्थोभयालंकारसंकरश्च[2] । तेषु शब्दालंकारसंकरो यथा—

हंसाली[3] भयतरला सारा सरसा सरासंसारसरासा[4] ।
अम्बरमैरमारूढा[5] सारासरसा सरासंसारसरासा ॥

अत्र संस्कृतप्राकृतभाषासंश्लेषः, गतप्रत्यागतं चित्रं, पदावृत्तियमकं[6], वर्णानुप्रासश्चेति चत्वारः शब्दालंकाराः[7] संकीर्यन्ते ॥

अर्थालंकारसंकरो यथा—

'वासावस्थितताम्रचूडवयसामायामिभिः कूजितै-
र्दूरादप्यनुमीयमानवसतिर्ग्रामोऽयमन्तर्वणम् ।
यत्रोद्दीप्तकुकूलकूटविसरज्झम्पाघनं[8] घूर्णते
सन्ध्यान्तोल्लसदच्छभल्लपटलच्छायाजटालं तमः ॥ ४६१ ॥'

अत्र ताम्रचूडवयसां कूजितैरित्यनुमानम्, यत्र तमो घूर्णत इति ज्ञापकहेतुः, कुकूलकूटविसरज्झम्पाघनमिति सन्ध्यान्तोल्लसदच्छभल्लपट-

---

१. 'शब्दोभयालंकारसंकरः' ख. २. अत्र 'च' इत्यधिकं क.ख. ३. 'हंसानामाली पङ्क्तिः । अम्बरमाकाशमरमत्यन्तमारूढा । किंभूता ।' भयेन चञ्चला । पुनः किंभूता । सरसा रससहिता । पुनः किंभूता । सरासाः सशब्दा ये सारसास्तेषां रासः क्रीडा यस्यास्तथा । पुनः किंभूता । आरासे शब्दे यो रसस्तत्सहिता । पुनः किंभूता । सरसं सरः गमनं तेनास्यते क्षिप्यते सरासः । सरसि भवः सारसः । स चासौ स च । एवंविधो रासः क्रीडा यस्यास्तथेति'. घ. पुस्तकस्यायुषि टिप्पणी. ४. 'सरागुना' क. ५. 'अम्बरमारूढा' क., 'अम्बरसाररूढा' ख. ६. 'पादावृत्तियमकम्' क.ख. ७. 'शब्दालंकाराः' क.ख. ८. 'सृगालकूलविसरधूम्यान्धनं' क., 'कुकूलकूटविसरधूम्याघनं' ख.

लच्छायाजटालमिति च कारकहेतुः, जायमानपदार्थस्वरूपाभिधानं जातिरित्यर्थालंकाराश्चत्वारो मिथः संकीर्यन्ते ॥

उभयालंकारसंकरो यथा—

'ण हु णवरं दीवसिहासारिच्छं[1] चंपएहिं[2] पडिवण्णम् ।
कज्जलकज्जं पि कअं[3] उअरि भमन्तेहिँ[4] भमरेहिँ ॥ ४६२ ॥'

[न खलु केवलं दीपशिखासादृश्यं चम्पकैः प्रतिपन्नम् ।
कज्जलकार्यमपि कृतमुपरि भ्रमद्भिर्भ्रमरैः ॥]

अत्र चम्पकादीनां प्रदीपशिखाभिराकारकान्तिभ्यामुपमा[5], विरहिणीहृदयदाहोद्द्योतनार्थक्रियाभ्यां[6] साम्यं, कज्जलपटलानामिव[7] भ्रमरपटलानामुपरि मेलनान्मेलितं, चम्पकदीपकलिकयोरिव भ्रमरकज्जलपटलयोरौपम्यादिसंबन्धात्समुच्चय इत्युभयालंकाराश्चत्वारो[8] मिथः संकीर्यमाणा उपलभ्यन्ते ॥

शब्दार्थालंकारसंकरो यथा—

'सर्वाशारुधि दग्धवीरुधि[9] सदा[10] सारङ्गबद्धक्रुधि
क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकन्दद्रुहि[11] ।
शुष्यत्स्रोतसि तप्तभूमिरजसि[12] ज्वालायमानाम्भसि
ग्रीष्मे[13] मासि खरार्कतेजसि कथं पान्थ व्रजञ्जीवसि ॥४६३'॥

अत्रावन्तिका रीतिः, पदमुद्रा, विभक्तिमुद्रा, अनुप्रासश्चेति शब्दा-

१. 'सरिच्छं' ख. २. 'चम्पएहि' ख. ३. 'कज्जम्मि' क. ४. 'आभमन्तेहि भमलेहि' ख. ५. 'आकारकान्तिमुपमा' क. ६. 'विरहिणीहृदयदाहोद्यमद्योतनार्थक्रियाभ्यां' क., 'विरहिणीहृदयदाहप्रद्योतनार्थक्रियाभ्यां' ख. ७. 'कज्जलपटलानामिवोपरि' क., 'कज्जलपटलानामुपरि' ख. ८. 'चत्वारो मिथः संकीर्यन्ते' क., 'चत्वारोऽपि संकीर्यन्ते' ख. ९. 'दग्धवीरधि' क. १०. 'रुषा' क. ११. 'स्वच्छन्दकुन्दद्रुहि' क.ख. १२. 'तप्तभूरिरजसि ज्वालायमानार्णसि' क.ख. १३. 'ज्येष्ठे' ख.

लंकाराः, जातिः, कारकज्ञापकौ हेतू, चित्रहेतुश्चेत्यर्थालंकारा मिथः संकीर्यन्ते।

शब्दोभयालंकारसंकरो यथा—

'स्तोकस्तोकममूभिरम्बरतले ताराभिरस्तं गतं
गच्छत्यस्तगिरेः शिरस्तदनु च च्छायादरिद्रः शशी।
प्रत्यासन्नतरोदयस्य तरणेर्बिम्बारुणिम्ना ततो
मञ्जिष्ठारसलोहिनी दिगपि च प्राची समुन्मीलति॥ ४६४॥'

अत्र समुन्मीलतीति विभक्तिमुद्रा, स्तोकस्तोकमस्तं गतं गच्छतीत्यादिरनुप्रासश्च शब्दालंकाराः, हेतूपमा, समाधिः, अनुक्रमः, समुच्चयोक्तिश्चेत्युभयालंकारा मिथः संकीर्यन्ते॥

अर्थोभयालंकारसंकरो यथा—

'खं वस्ते कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलं
चर्चां पारयतीव दर्दुरकुलं कोलाहलैरुन्मदम्।
गन्धं मुञ्चति सिक्तलाजसुरभिं वर्षेण दग्धा स्थली
दुर्लक्ष्योऽपि विभाव्यते कमलिनीहासेन भासां पतिः॥४६५॥'

अत्र जातिः, अनुमानम्, कारकज्ञापकहेतू चेत्यर्थालंकाराः, रूपकोपमा, हेतूपमा, उत्प्रेक्षोपमेति चोभयालंकारा मिथः संकीर्यन्ते॥

एतेन गुणालंकारसंकरोऽपि व्याख्यातः। यतो यद्यपि गुणवत्येव वाक्येऽलंकारयोगस्तथापि क्वचिद् गुणस्य प्राधान्यं क्वचिदलंकारस्येति प्रधानाङ्गभावेन गुणालंकारयोः संकरव्यवहारः प्रवर्तते। स षोढा—शब्द-

१. 'ज्ञापककारकहेतू' क. २. 'मिथः शब्दे संकीर्यन्ते' ख. ३. 'एवमुभयालंकारसंकरो यथा' क. ४. 'अस्तं गच्छतीत्यादिः' ख. ५. 'चर्चा' क.ग. ६. 'सिक्तजालसुरभि' क., 'सिक्तलाजसुरभिः' ख. ७. 'चेति उभयालंकाराः' क.ख. ८. 'अतो' क.ख. ९. 'संकरयोगः' क.ख.

गुणप्रधानः, अर्थगुणप्रधानः, दोषगुणप्रधानः[1], शब्दालंकारप्रधानः, अर्थालंकारप्रधानः, उभयालंकारप्रधानश्च[2] ॥

तेषु शब्दगुणप्रधानो यथा—

'प्राप्तश्रीरेष कस्मात्पुनरपि मयि[3] तं मन्थखेदं विदध्या-
न्निद्रामप्यस्य पूर्वामनलसमनसो नैवं[4] संभावयामि ।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते वितर्कानिति दधत[5] इवाभाति कम्पः पयोधेः ४६६'

अत्र हेतूत्प्रेक्षाभिधाने त्वयीत्यादौ पदे विष्णोः स्वरूपाध्यासेन तद्भावापत्तौ समाधेरिह प्राधान्यं[6] प्रतीयते । ननु चायमर्थस्य प्राकट्यात्प्रसादोऽर्थगुणः कस्मान्न भवति । अस्मिन्नपि तद्व्यपदेशेन शब्दशक्तेराधिक्यात् । ननु च त्वयि इति, एष इति, अस्य इति, युष्मदेतदि[7]दमां न कश्चन[8] विष्णुवाची स कथं वर्णनीये न्यस्त[9]स्तं तमर्थमभिदधीत । उच्यते, सर्वनामत्वेनैषां सर्ववाचित्वात् । सर्वनामानि हि सर्वाभिधायी[10]न्यपि प्रकरणा[11]दिगम्यं विशेषमेव ब्रुवते स च इह प्राप्तश्रीरित्येवमादिभिरभिव्यक्त[12]मेवावगम्यत इति ॥

अर्थगुणप्रधानो यथा—

'लक्ष्मीवशीकरणचूर्णसहोदराणि
त्वत्पादपङ्कजरजांसि चिरं जयन्ति ।

---

१. 'दोषालंकारप्रधानः' क. २. 'इति' इत्यधिकं क.ख. ३. 'मथितुं मन्दरं वा' ख. पद्यमेतद् ध्वन्यालोके( २।३० )ऽप्युदाहृतम्. ४. 'नाप्यहं तर्कयामि' क. ५. 'विदधति' क. ६. 'समाधेः प्राधान्यमिह' क.ख. ७. 'युष्मदेतदिदमदः' क., 'युष्मदस्मदिदमां' घ. ८. 'कश्चिन्न विष्णुवाची' क. ९. 'स कथं वर्णनीये वस्तुनि तमर्थमभिदध्यात्' क.ख. १०. 'सर्वनामाभिधायीन्यपि' क. ख. ११. 'प्रकरणादिगम्यं विशेषमर्थं च ब्रुवते' क., 'प्रकरणादिगम्यविशेषमिव ब्रुवते' ख. १२. 'अभिव्यक्तमेवाभिगम्यते इति' क., 'अभिव्यक्त एवाभिगम्यते इति' ख.

यानि प्रणाममिलितानि नृणां ललाटे
लुम्पन्ति दैवलिखितानि दुरक्षराणि ॥ ४६७ ॥'

अत्र हेतुसाम्योभयालंकाराभिधानेऽपि प्राधान्येनार्थप्राकट्यमर्थगुणः प्रतीयते ॥

दोषगुणप्रधानो यथा—

'येनापविद्धसलिलस्फुटनागसद्मा
देवासुरैरमृतमम्बुनिधिर्ममन्थे ।
व्यावर्तनैरहिपतेरयमाहिताङ्कः
खं व्यालिखन्निव विभाति स मन्दराद्रिः ॥ ४६८ ॥'

अत्र 'व्यावर्तनैरहिपतेरयमाहिताङ्कः' इति ज्ञापकहेतोः 'खं व्यालिखन्निव' इति उत्प्रेक्षावयवाच्च, देवासुरैरिति नित्यवैराविवक्षायां बहुवचनम्, 'अमृतमम्बुनिधिर्ममन्थे' इति द्विकर्मकेष्वपि मथिप्रभृतीनामुपसंख्यानमिति अमृतशब्दाद्द्वितीया इति दोषगुणयोः प्राधान्यं प्रतीयते । ननु चात्रार्थस्य प्राधान्यं कथं भवति तद्विषयस्य ज्ञापकहेतुनापहृतत्वात्सोऽप्यर्थालंकार एव । गुणालंकारयोश्च तुल्यकक्षतायामलंकारः प्रधानं भवति न गुणः । गुणैर्हि गुणभूतैरेवालंकाराः प्राय आरभ्यन्ते । तद्यथा—

'अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता ।
विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥
समस्तात्युद्भटपदामोजःकान्तिसमन्विताम् ।
गौडीयेति विजानन्ति रीतिं रीतिविचक्षणाः ॥

१. 'लिम्पन्ति' घ. २. 'अत्र हेतुवाक्यउभयालंकारप्राधान्येनार्थप्राकट्यमर्थगुणः प्रतीयते' क. ३. 'नित्यविवक्षायाम्' ख. ४. 'प्राधान्यं न भवति' क.ख. ५. 'समस्तैत्युत्कटपदाम्' क., 'समस्तात्युत्कटपदाम्' ख. ६. 'गौडीयां तां' क.ख.

आश्लिष्टश्लथभावां तु पुराणच्छायमाश्रिताम् ।
मधुरां सुकु[1]मारां च पाञ्चालीं कवयो विदुः ॥
माधुर्यमपि वाञ्छन्तः प्रसादं च सुमेधसः ।
समासवन्ति भूयांसि न पदानि प्रयुञ्जते ॥
लाटीयावन्त्ययो रीत्योर्मागध्यां च क्वचित्क्वचित् ।
केचिदोजोऽभिधित्सन्तः समस्यन्ति बहून्यपि ॥
प्रतीतशब्दमोजस्वि सुश्लिष्टपद[2]संधि च ।
प्रसादि स्वभिधानं च यमकं[3] कृतिना मतम् ॥' इति ।

मा भूदलंकारतुल्यकक्षतया अर्थस्य[4] प्राधान्यं शब्दगुणस्य तु श्लाघ्यविशेषगुणयोग उदात्तमित्यादेः किमिति प्राधान्यं न भवति दोषगुणानामतीवोल्लेखवत्त्वेन[5] प्राधान्यात्[6] ॥

सा[7] वामनप्रसिद्धिर्लङ्घितनभसो बलिद्विषोऽद्यापि ।
मत्सरिणः खलु लोका मर्माण्येवानुबध्नन्ति ॥

दोषस्य यो गुणीभावः स ततोऽप्यधिकं प्रकाशत इति ॥

शब्दालंकारप्रधानो यथा—

'यच्चन्द्रकोटिकरकोरकभार[8]भाजि
बभ्राम बभ्रुणि जटापटले हरस्य ।
तद्वः पुनातु हिमशैलशिलानिकुञ्ज-
झा[9]त्कारडम्बरविरावि सुरापगाम्भः ॥ ४६९ ॥'

१. 'सुकुमारीं च' ख. २. 'सुश्लिष्टपदसंधिता' क., 'सुश्लिष्टपदसंधिमत्' ख. ३. 'चायामकं कृतिनां मतम्' क ख. ४. 'अर्थप्रधानोदारगुणस्य' ख. ५. 'मतीवोल्लेखविधित्वेन' क.ख. ६. 'प्र(प्रा)धान्यात्' क. ७. अत्र 'यथा—' इत्यधिकं क. ८. 'कोरकभारभाजि' क., 'कोरकहारभाजि' ख. ९. 'टाङ्कारडम्बरविरावि' क., 'प्राकारडम्बरविरावि' ख.

अत्रार्थप्राकट्यं प्रसादः विभवोत्कर्ष उदात्तता मृदुप्रस्फुटोन्मिश्रवर्णानामवैषम्यं समता, बन्धगाढता, और्जित्यमित्यादिभ्यो गुणेभ्यः प्राधान्येन शब्दालंकारानुप्रासः प्रतीयते ॥

अर्थालंकारप्रधानो यथा—

'आश्लेषिणः पृथुतरक्लमपीतशीत-
मायाविनीर्घनमुदो रजनीर्युवानः ।
ऊर्ध्वोर्मुहुर्वलनबन्धनसन्धिलोल-
पादान्तसंवलिततूलपटाः स्वपन्ति ॥ ४७० ॥'

अत्र बन्धविकटत्वमुदारता, श्लाघ्यविशेषणयोग उदात्तत्वम्, विभवोत्कर्ष औदार्यम्, दीप्तरसत्वम्, कान्तिरित्यादिभ्यो गुणेभ्यः प्राधान्येन जातिरर्थालंकारः प्रतीयते ।

उभयालंकारप्रधानो यथा—

'अभ्युद्धृता वसुमती दलितं रिपूरः
क्रोडीकृता बलवता बलिराजलक्ष्मीः ।
अत्रैकजन्मनि कृतं यदनेन यूना
जन्मत्रये तदकरोत्पुरुषः पुराणः ॥ ४७१ ॥'

अत्रोक्तिपरिपाटीः प्रौढिः, बन्धविकटत्वमुदारता, आशयोत्कर्ष उदात्तत्वम्, अर्थप्राकट्यं प्रसादः—इत्यादिभ्यो गुणेभ्यः श्लेषोपसर्जना विशेषोक्तिरुभयालंकारः प्राधान्येन प्रतीयते ॥ रससंकरोऽपि चालंकारसंकरवदेव । भावरसाभासप्रशमानां तिलतण्डुलादिप्रकारेण संकरः षट्प्रकारको भवति । तत्र भावानां तिलतण्डुलप्रकारो यथा—

१. 'पृथुरतक्लम' क.ख. २. 'कण्ठैः' ख. ३. 'लोलपटाः' क.ख. ४. 'उदात्तता' क.ख. ५. 'अभ्युद्गता' ख. ६. 'उक्तिपरिपाकः' क. ७. 'षड्प्रकारो' क.ख.

'न्यक्कारो हृदि वज्रकील इव मे तीव्रः परिस्पन्दते
घोरान्धे तमसीव मज्जति मनः संमीलितं लज्जया ।
शोकस्तार्क्ष्य[1]विपच्चितो दहति मां[2] नास्त्येव यस्मिन्क्रिया
मर्माण्येव[3] पुनश्छिनत्ति करुणा सीतां वराकीं प्रति ॥४७२॥'

अत्रामर्षलज्जाशोकानुकम्पाः समकक्षतया मिथस्तिलतण्डुलवत्संकीर्यमाणा रामस्य विरहिणो वागारम्भानुभा[4]वोक्तिपरतया प्रतीयन्ते ॥

क्षीरनीरप्रकारो यथा—

'मानोन्नतेत्यसहनेत्यतिपण्डितेति
मय्येव धिक्कृतिरनेकमुखी सखीनाम् ।
दाक्षिण्यमात्रमसृणेन विचेष्टितेन
धूर्तस्य तस्य हि गुणा नु परं जयन्ति ॥ ४७३ ॥'

अत्र सखीषु रोषः प्रियगुणेषु चासूया, क्षीरनीरवन्मिथः संकीर्यमाणौ[5] मानिनीवागारम्भपरतया प्रतीयेते[6] ॥

छायादर्शप्रकारो यथा—

'आः सीते पतिगर्वविभ्रमभरभ्रा[7]न्तभ्रमद्बान्धव-
प्रध्वंसस्मितकान्तिमत्तव तदा जातं यदेतन्मुखम् ।
संप्रत्येव हठात्तदे[8]व कुरुते केशोच्चयाकर्षण[9]-
त्रासोत्तानितलोललोचनपतद्बाष्पप्लुतं रावणः ॥ ४७४ ॥'

अत्र क्रोधाभासे छायादर्शन्यायेन रत्याभासः संकीर्यमाण[10] उपलभ्यते ॥

---

१. 'तातविपत्तिजो' ख., 'तार्क्ष्यसजातीयत्वात् तार्क्ष्योऽत्र जटायुरभिधीयते' घ. पुस्तकस्यायुषि टिप्पणी. २. 'दहति यन्नास्त्येव' क. ३. 'मर्माणीव' ख. ४. 'अनुरागोक्तिपरतया' क.ख. ५. 'संकीर्यमाणौ' क., 'संकीर्यमाणे' ख. ६. 'प्रतीयेते' क.ख. ७. 'प्रान्त' क. ८. 'तदेव' क.ख. ९. 'केशोच्चयोत्कर्षण' क.ख. १०. 'संकीर्यते' क.ख

नरसिंहप्रकारो[1] यथा—

'किं द्वारि दैवहतिके सहकारकेण
संवर्धितेन विषपादप एष पापः ।
अस्मिन्मनागपि विकाश[2]विकारभाजि
भीमा भवन्ति मदनज्वरसंनिपाताः ॥ ४७५ ॥'

अत्र नरसिंहजाताविव सिंहनरशरीरभागौ[3] सहकारवर्णनावागारम्भानुसारेण सखीविषयानुकम्पा सहकारविषया च कुत्सा मिथः संकीर्येते । तथा हि दैवहतिके इति[4]शब्देन लब्धायां नियत्युपाधौ सर्वथैवानुकम्प्यमानतायां सहकारसंवर्धननिबन्धनत्वमेवास्याः कला द्योत्यते । एवं नाम त्वं दैवोपहतासि यत्सहकारच्छद्मानं विषपादपं[5] द्वारि संवर्धयसीति[6] । विषपादपशब्देन च[7] लब्धायां सहकारस्य सर्वथैव कुत्सायां विकास[8]काले कामिनीनामसह्यस्मरज्वरसंनिपातहेतुकत्वमेवास्याः कप्रत्ययेन[9] प्रत्याय्यते ॥ तदुक्तम्—

कुत्सितत्वेन कुत्सावान्सम्यग्वापि हि कुत्सितः ।
स्वशब्दाभिहिते केन विशिष्टोऽर्थः प्रतीयते ॥
न च सांप्रतिकी कुत्सा शब्दभेदे प्रतीयते ।
पूज्यते[10] कुत्सितत्वेऽपि प्रशस्तत्वेऽपि कुत्स्यते[11] ॥

१. 'नरसिंहवद् यथा—' क. २. 'विकासविकारभाजि' क. ३. 'सिंहनरशरीर-वागारम्भानुसारेण' क.ख. ४. 'दैवहतिकेशब्देन' क.ख. ५. 'सहकारविषपादपं' क.ख. ६. 'इति' क.ख. नास्ति. ७. 'च' क.ख. ८. 'विकासकाल' क.घ. ९. 'कप्रत्ययेन' क. १०. 'युज्यते' ख. ११. 'इति' इत्यधिकं क.

तद् यथा—

'एक इह जीवलोके जीवतिरूपं नृरूपपशुरूपः[1] ।
यः प्रेमपाशेपाशे[2] मृग[3] इव न मृगीदृशां पतति ॥ ४७६ ॥'

पांसूदक[4]प्रकारो यथा—

'मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं न सखि भाजनमीदृशानां
वैरी न चेद्भवति वेपथुरन्तरायः ॥ ४७७ ॥'

अत्र स्वसौभाग्यवर्णना मृत्पिण्डे पांसूदकयो[5]रिवाविभागमापाद्यमानयोरसूयागर्वयोः संकर उपलभ्येते[6] ॥

चित्रवर्णप्रकारो यथा—

'विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।
झटित्यस्मिन्दृष्टे किमपि परवानस्मि यदि वा
महार्घस्तीर्थानामिव[7] हि महतां कोऽप्यतिशयः ॥४७८॥'

अत्र वीरौद्धत्यस्वातन्त्र्यरसानामानन्दप्रशमपारवश्यरसैस्तिरस्क्रियमाणानां पट इव नीलादिभिः[8] सीतादीनां[9] प्रशमा रामदर्शनप्रभावोद्भवे

---

१. 'नृरूपपशुरूपः' इति क. पाठस्त्रुटितः । 'न रूपमभ्युदये' इति ख. पाठः. २. 'प्रेममात्रपाशे' क., 'यः प्रेममाशयाशे' ख. ३. 'मृगवन्न मृगीदृशां' ख. ४. 'पांशूदकप्रकारो यथा' ग. ५. 'पांशूदकयोरिव' ग. ६. 'उपपद्यते' क.ख. ७. 'किमिह महतां' क. ८. 'पटवर्णनीलादिभिः' क., 'पटनीलादिभिः' ख. ९. 'सितादीनां' क.

लवस्य विस्मयातिशयप्रशमजन्मनि वागारम्भानुभावोपमापदे[1] चित्रवर्णवत्संकीर्यमाणाः समुपलभ्यन्ते ॥

## अथ रसगुणसंकरः[2] ।

ननु च दोषहानमिव[3] गुणोपादानमपि नियमनिर्वर्त्यम्[4] । अलंकारयोग इव रसावियोगोऽप्यवश्यं विधेयः । कदाचिदलंकारयोगोऽपि त्यज्यते न तु[5] रसावियोगो गुणयोगश्च व्यभिचरितसंबन्धाविति । अत्रोच्यते । यत्र चित्र[6]वर्णवन्नरसिंहवत्पांसूदकवच्चा[7]वयवावयविन्यायेन जातिव्यक्तिन्यायेन चा[8]पृथक्प्रयत्ननिर्वर्त्यानां[9] गुणरसानां वाक्ये संनिवेशस्तत्र संकरव्यवहारो न प्रवर्तते ॥

तद् यथा—

मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः ।
येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥
कामं सर्वोऽप्यलंकारो रसमर्थे निषिञ्चति ।
तथाप्यग्राम्यतैवैनं भारं वहति भूयसा ॥
शृङ्गार एव म[10]धुरः परप्रह्लादनो[11] रसः ।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥
शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् ।
माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ॥

---

१. 'वागारम्भानुभावोपमाद्भवेदेतच्चित्रवर्णवत्' क., 'वागारम्भानुभावोपमोद्भवेच्चित्रवर्णवत्' ख. २. 'अथ कोऽयं गुणसंकरः' क. ३. 'ननु दोषहानिरिव' ख., 'दोषहानिनमिव' च घ. ४. 'नियमनिवर्त्यम्' क. ५ 'नतु रसादिव्यभिचरितसंबन्धाविति' क.ग. पुस्तके च 'नतु' इत्यस्य स्थाने 'ननु' इति वर्तते. ६. 'वर्णवत्' ग. ७. 'पांशूदकवच्च' ग. ८. 'वापृथक्' क. ९. 'प्रयत्नानिर्वर्त्यानां' क. १०. 'सर्वेषु' क. ११. 'परः प्रह्लादनो रसः' इति ध्वन्यालोके (२।८).

रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः[1] ।
तद्व्यक्तिहेतू शब्दार्थावोजोधिष्ठाय तिष्ठति[2] ॥
समर्थकत्वं[3] वाक्यस्य यत्तु सर्वरसान्प्रति ।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥'

सेयं गुणानां रसारम्भकत्वे संकराप्रसिद्धिः । एवं रसानां गुणारम्भकत्वेऽपि । तद्यथा—रूढाहंकारतौर्जित्यम्, भावतो वाक्प्रवृत्तिर्भाविकत्वम्[4], क्रोधादावप्यतीव्रता[5], माधुर्यम्, आशयोत्कर्षः, उदात्तत्वम्, अर्थस्याभीष्टतमता[6], प्रेयः, दीप्तरसत्वं, कान्तिरिति । यत्र तु तिलतन्दुलवत्[7] क्षीरनीरवच्छायादर्शवत् तुल्यकक्षतयैव गुणरसानां वाक्येऽपृथक्प्रयत्ननिर्वर्त्यानां[8] विनिवेशस्तत्र संकरव्यवहारः प्रवर्तत एव । स षोढा—गुणप्रधानः—रसप्रधानः, उभयप्रधानः, उभयाप्रधानः, गुणाधिकः, रसाधिक इति ॥

तेषु गुणप्रधानो यथा—

'अत्रान्तरे ललितहारलतानितम्ब-
संवाहनस्खलितवेगतरङ्गिताङ्गी ।
देवी व्यपास्य शयनं धृतमानतन्तु-
रन्तःपुरं गतवती सह सौविदल्लैः ॥ ४७९ ॥'

---

१. 'कार्यवर्तिनः' क. २. 'तद्व्यक्तिहेतू शब्दार्थावोजोऽधिष्ठाय तिष्ठति' क., ध्वन्यालोके तु 'तद्व्यक्तिहेतू शब्दार्थावाश्रित्योजो व्यवस्थितम् ।' इति पाठः. ३. 'समर्पकत्वं वाप्यस्य' क., ध्वन्यालोके तु 'समर्पकत्वं काव्यस्य' इति. ४. 'भावतो वाक्प्रवृत्तिः' क., 'भावयतो वाक्यवृत्तिः' ख. ५. 'क्रोधादावप्यस्य तीव्रत्वं' क., 'क्रोधादावपि तीव्रता' ख. ६. अर्थस्याभीष्टतन्मयता' ख. ७. 'तिलतण्डुलवत्' क.ख. ८. 'वाक्ये पृथक् प्रयत्न' क.ख.

अत्रार्थप्राकट्योदार्ययोरर्थशब्दगुणयोः प्राधान्यं न रतिक्रोधयोरिति गुणप्रधानः ॥

रसप्रधानो यथा—

'अस्मिन्नगृह्यत पिनाकभृता सलील-
मारब्धवेपथुरधीरविलोचनायाः ।
विन्यस्तमङ्गलमहौषधिरीश्वरायाः
स्रस्तोरगप्रतिसरेण करेण पाणिः ॥ ४८० ॥'

अत्र श्लाघ्यविशेषणयोग उदात्तत्वम्, बन्धविकटत्वमुदारता, अर्थप्राकट्यं प्रसादः, दीप्तरसत्वं कान्तिरिति गुणाः साध्वसविलासानुरागसंगमरसैरतिशय्यन्त इति रसप्रधानः ॥

उभयप्रधानो यथा—

'आपातमात्ररसिके सरसीरुहस्य
किं बीजमर्पयितुमिच्छसि वापिकायाम् ।
कालः कलिर्जगदिदं न कृतज्ञमज्ञे
स्थित्वा हरिष्यति तवैव मुखस्य शोभाम् ॥ ४८१ ॥'

अत्र भणितिविशेष उक्तिः संविधाने सुसूत्रता श्लेष इति शब्दगुणयोर्लावण्यविलासवर्णनीयरसयोश्च तुल्यकक्षतया निर्देश इत्युभयप्रधानः ॥

उभयाप्रधानो यथा—

'अभिनववधूरोषस्वादुः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवे-
र्विरहिवनितावक्त्रक्लैव्यं बिभर्ति निशाकरः ॥ ४८२ ॥'

१. 'प्राधान्यं न रतिक्रोधयोः' ग. नास्ति. २. 'न भवति क्रोधयोः' ख. ३. 'स्वसूत्रता' ख. ४. 'निर्दिशत्युभयप्रधानः' क. ५. 'आज्ञेवाथ' ग.

अत्र स्वादुक्रूरमसृणक्लैब्यमित्यन्यधर्माणामन्यत्रारोपणं समाधिः, अभिनववधूरोषादीनां चतुर्णामप्यर्थानां स्वाद्वादीनां च लक्षणादिलक्षितानां प्राकट्यं प्रसादः, अभिनववधूरोषस्वादुः करीषतनूनपात् इति विशेषणविशेष्याणामुपक्रमेण निर्वहणं रीतिः, पादचतुष्टये चतुर्णामर्थानां विभक्त्यसमत्वेन निवेशः संमितत्वमिति चत्वारो गुणाः, चत्वारश्च रत्यमर्षविषादजुगुप्सात्मानो रसाः कालावस्थानिवेदनपरत्वेन प्रतीयन्त इत्युभयाप्रधानः ॥

गुणाधिको यथा—

'अजननिरस्तु विभूतेरपूरणिर्भवतु सर्वकामानाम् ।
मा याचिषि मा सेविषि मा सहिषि पराभवं धनिनः ॥ ४८३ ॥'

अत्र सुप्तिङ्व्युत्पत्तिः सौशब्द्यम्, वाक्यानां परिपूर्णत्वमर्थव्यक्तिः, अर्थस्य प्राकट्यं प्रसादः, विभूतेरनुत्पत्तौ कामा न पूर्यन्ते, अपरिपूर्णकामो याचते, याचमानस्तदनाप्नुवन् धनिनः सेवते, सेवमानस्तु तैः परिभूयत इत्युत्पत्त्यादिक्रियाक्रमो रीतिरिति गुणाश्चत्वारः, रसस्तु निर्वेद एवैक इति गुणाधिकः ॥

रसाधिको यथा—

'कमलमनम्भसि कमले कुवलयमेतानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥ ४८४ ॥'

अत्र कमलमनम्भसि कमले कुवलयमेतानि कनकलतिकायाम् इत्यन्यधर्माणामन्यत्रारोपणं समाधिः, सा च सुकुमारसुभगेत्युत्पातपरम्परा केयमित्यश्लीलामङ्गलार्थौ दोषगुणावपि, श्लाघ्यविशेषणगुणयोग उदात्त-

१. 'वक्रक्लैब्य' ख. २. 'निबर्हणम्' ख. ३. 'व्युत्पत्तिसौशब्द्यम्' ख.

त्वम्, विकटबन्धत्वमुदारता, उपक्रमाभेदो रीतिः, अर्थप्राकट्यं प्रसादः, अनिष्ठुरता सौकुमार्यम्, अभीष्टतमता प्रेयः, दीप्तरसत्वं कान्तिरिति गुणा दश, रसास्तु रत्युत्कर्षहर्षधृत्युत्कण्ठावेगविस्मयमतिवितर्कचिन्ताचपलत्राहासोत्साहस्तम्भगद्गदोन्मादव्रीडावहित्थभयशङ्काः विंशतिर्वागारम्भानुभावे शृङ्गारिणः प्रियाचाटुकारस्य कस्यचित्प्रतीयन्त इति रसाधिकः ॥

रसालंकारसंकरोऽप्येतेन व्याख्यातः ।

**रसवन्ति हि वस्तूनि सालंकाराणि कानिचित् ।**
**एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः ॥ १७३ ॥**
**रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् ।**
**अपृथग्यत्ननिर्वर्त्यः सोऽलंकारः प्रकृष्यते ॥ १७४ ॥**
**रसाभावादिविषयविवक्षाविरहे सति ।**
**अलंकारनिबन्धो यः स कविभ्यो न रोचते ॥ १७५ ॥**

तत्र रसालंकारसंकरो द्विधा—रसप्रधानोऽलंकारप्रधानश्च । तयोर्योऽनुभवित्रैव वर्ण्यते स रसप्रधानः । तत्र ह्यलंकारवतो वाक्यस्य वागारम्भानुभावत्वं भवति ॥

तत्र रतावुपमायाः संकरो यथा—

'तीए दंसणसुहए पणअक्खलणजणिओ मुहम्मि मणहरे ।
रोसो वि हरइ हिअअं मअपंको व मिअलंछणम्मि णिसण्णो ४८५'

[तस्या दर्शनसुभगे प्रणयस्खलनजनितो मुखे मनोहरे ।
रोषोऽपि हरति हृदयं मदपङ्क इव मृगलाञ्छने निषण्णः ॥]

---

१. 'अर्थस्य प्राकट्यं' क. २. 'आभीष्टतमता' क. ३. 'मति' ख. नास्ति. ४. 'व्रीडावहित्थाभयशङ्काः' क. ५. 'निवर्त्यन्ते' क.ख.ग. ६. 'सोऽलंकारो ध्वनौ मतः' इति ध्वन्यालोके. ७. 'तयोर्ये' क. ८. 'पणअएवलण' क., 'पणअकवलण' ख. ९. 'मअअंपंकोव' क., 'मअअंकोव्व' ख. १०. 'मअतद्धलण्णि निसण्णे' क.

अत्रोपमातिरस्कारेण रसवतो हरेर्वचसि वागारम्भरूपे रुक्मिणीप्रदत्तपारिजातमञ्जरीविलोकनप्रभवं सत्यभामाया रोष[1]रामणीयकं प्राधान्यतः प्रतीयते ॥

रतावेव विपरीतोपमा यथा—

'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानु[2]कारी शशी ।
ये[3]ऽपि त्वद्गमनानु[4]कारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥४८६॥'

अत्र विरहिणो रामस्य प्रियावयवसादृश्यदर्शनेनात्मानं विनोदयत उपायभ्रंशादरतिप्र[5]भवविषादवागारम्भे स्वरूपाभिधाने प्रक्षीणशक्तिरप्राधान्येनोपमा प्रतीयते ॥

रतावेव प[6]र्यायस्य यथा—

'किं गुरुजहणं अ[7]ह थणभरो त्ति भाअ[8]करअलग्गतुलिआए[9] ।
विहिणो खु[10]त्तंगुलिमग्गवि[11]ब्भमं वहइ से[12] तिवली ॥ ४८७ ॥'

[किं गुरुजघनमथ स्तनभर इति भागकरतलाग्रतुलितायाः ।
विधेः खाताङ्गुलिमार्गविभ्रमं वहत्यसास्त्रिवली ॥]

अत्र यद्यपि रतिप्रभवेभ्यो विस्मयादिभ्यः संशयहेतूत्प्रेक्षोपमा[13]दिभ्यश्च पर्यायालंकारः प्राधान्येन प्रतीयते तथाप्यसौ वागारम्भानुभाव इति र[14]तावप्राधान्यमेवानुभवति ॥

---

१. 'एव' ख. २. 'मुखच्छायानुकारः' क.ख. ३. 'यो' ख. ४. 'त्वद्गमनानुसारिगतयः' घ. ५. 'उपायभ्रंशारतिप्रभ' क. ६. 'विपर्ययो' क. ७. 'अह थण' क.ख. ८. 'भावअकरअ' क. ९. 'तूलिआए' ख. १०. 'खत्तंगुलि' क. ११. 'यगा विम्भम' क., 'थणत्त्विब्भमं' ख. १२. 'स' क. १३. 'उपमाभ्यः' क. १४. 'रतावप्यप्राधान्यम्' क.ख.

एतावेव समाधिर्यथा।

'कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरङ्गविषमे निस्यन्दतामागता।
मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने॥ ४८८॥'

अत्र वत्सराजेन स्वदृष्टौ प्राणिधर्माः समाधीयमानाः सागरिकादर्शनोत्थरतिवागारम्भे व्यभवन्ति॥

एतावेवार्थश्लेषस्य यथा—

'कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः।
मुहुर्लग्नः कण्ठे तरलयति बाष्पः स्तनतटीं
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम्॥४८९॥'

अत्र यद्यप्याक्षेपेण वाक्योपसंहारस्तथापि प्रिय इत्यादिभिः प्राधान्येनाभिधीयमानः श्लेष एव शृङ्गारिणो वागारम्भानुभावाङ्गतामङ्गीकरोति॥

एतावेव पर्यायोक्तेर्यथा—

'मुक्ताः कन्धरया धृता स्तनतटेनोत्तुङ्गता कुम्भयोरूरुभ्यां परिणाहिता क्रमवती हस्तस्य पद्भ्यां गतिः।
एतद्वः करिघातिनस्तु कठिनं चर्मैव कोऽयं हठश्चण्डीति त्रिपुरारिकेलिवचनैरार्यास्मितं पातु वः॥४९०॥'

अत्र भगवतश्चाटूक्तिवागारम्भे देव्याः पर्यायवर्णना शेषभावं लभते

---

१. 'निष्पन्दताम्' क.ख. २. 'जलभरप्रस्यन्दिनी' क.ख. ३. 'दर्शनार्थे' क.ख. ४. 'रति—' क.ख. ५. 'निश्वासैः' क.ख.ग. ६. 'बाष्पस्तनतटी' क., 'बाष्पस्तनतटीं' ग. ७. 'अनुभावाङ्गत्वं' क. ८. 'कृताः' क., 'धृताः' ख. ९. 'आर्यान्वितं' क. १०. 'श्लेषभावं' क.ख.

[1]यं उदासीनेन वर्ण्यते सोऽलंकारप्रधानः स हि रसभावादेः संकरप्रकारमभिधित्सुः स्वभावोक्तिं वक्रोक्तिं वावलम्बते ॥

तत्र स्वभावोक्तिपक्षे जातिः ॥

सा विधिमुखेन यथा—

'थोओसरि[2]ंतरोसं थोअ[3]त्थोअपरिवड्ढमाणपहरिसम्।
होइ अ दूरपआसं उहॅ[4]अरसाअंतविब्भमं[5] तीअ मुखम् ॥४९१॥'

[स्तोकापसरद्रोषं स्तोकस्तोकपरिवर्धमानप्रहर्षम्।
भवति च दूरप्रकाशमुभयरसायत्तविभ्रमं तस्या मुखम् ॥]

अत्र सत्यभामाया रोषस्यापसर्पतः[6] प्रहर्षस्य च प्रसर्पतो येऽनुभावा जिह्मावलोकनमुखप्रसादादयस्त इह संकीर्यमाणाः कविनोभयरसायत्तविभ्रममित्यनेन[7] यथावदवस्थिता भवन्तीति विधिमुखेनाभिधीयन्ते ॥

जातिरेव निषेधमुखेन यथा—

'धीरेण माणभंगो माणक्खलणेण[8] गरुअ धीरारम्भो।
उल्लइ तुलिज्जंते[9] एक्कम्मि वि से थिरं ण लग्गइ हिअअं ४९२'

[धैर्येण मानभङ्गो मानस्खलनेन गुरुकधैर्यारम्भः।
उल्ललति तोल्यमाने एकस्मिन्नप्यस्याः स्थिरं न लगति हृदयम् ॥]

अत्र यद्यपि हेतूपन्यासो वर्तते तथापि तस्य स्वभावाख्यानपरिकर[10]त्वेनाप्राधान्येन हृदयक्रियास्वरूपमेवेह[11] निषेधमुखेनाभिधीयत इतीयं जातिरेव भवति ॥

---

१. 'यत्र' क.ख. २. 'थोओउसरत' क. ३. 'थोअपरिवट्टमान' क.ख. ४. 'उअह' क.ख. ५. 'विब्भंतीअ' ख. ६. 'अपसज्जतः' क. ७. 'उभयरसायत्तमित्यनेन' ख. ८. 'माणकवलणेण सहायं गरुअधीरारम्भो' ख. ९. 'उलल्इ तुलिते' ख. १०. 'भावाख्यानपरिकरत्वेन' ख. ११. 'स्वरूपमेव हि' क.

सैव विधिनिषेधाभ्यां यथा—

'हेलोदस्तमहीधरस्य तनुतामालोक्य दोष्णो हरे-
र्हस्तेनांसतटेऽवलम्ब्य चरणावारोप्य तत्पादयोः।
शैलोद्धारसहायतां जिगमिषोरस्पृष्टगोवर्धना
राधायाः सुचिरं जयन्ति गगने वन्ध्याः करभ्रान्तयः ४९३'

अत्र राधायाः प्रेयसि हरौ यथावेदस्तितोद्भूतवृत्तिस्नेहशङ्कोत्साहा मिथः संकीर्यमाणा भयावेगस्मृतिमतिवितर्कादिभिर्व्यभिचारिभावैरालम्बनचरणाक्रमणसहकृतायां करभ्रान्तौ शरीरारम्भानुभावे प्रतीयमाना अस्पृष्टगोवर्धना वन्ध्या इति निषेधमुखेन जयन्तीति विधिमुखेन चाभिधीयन्ते॥

वक्रोक्तिपक्ष उपमादयः।

तेषूपमा यथा—

'चोरा सभअसतण्हं पुणो पुणो पेसअंति दिट्ठीओ।
अहिरक्खिअणिहिकलसे व पोढमहिलाथणुच्छंगे॥ ४९४॥'

[चोराः सभयसतृष्णं पुनः पुनः प्रेषयन्ति दृष्टीः।
अभिरक्षितनिधिकलश इव प्रौढमहिलास्तनोत्सङ्गे॥]

अत्र चौरगतभयानुरागयोः संकरस्वभावोक्तिमतिभूयोत्तरार्धागतमौपम्यं प्राधान्येन प्रतीयते॥

---

१. 'हस्तेनास त एव' क., 'हस्तेनांसत एव' ख. २. 'यथावदवस्थिता अद्भुत—' ख. ३. 'चोरा भअसतहणं पुणो पेसवति दिव्वीओ। अहिरस्थिअनिहिकलसे थयोक्कडलपूइखणुत्सङ्गे' क. ४. 'पोढवइआथणुच्छङ्गे' गाथासप्त०, 'प्रौढपतिकास्तनोत्सङ्गे' इति च्छाया च. ५. 'चोरगत—' ग.घ.

उपमैव रसाभाससंकरविषया यथा—

'एकेनार्कं प्रविततरुषा पाटलेनास्तसंस्थं
पश्यत्यक्ष्णा सजलतरलेनापरेणात्मकान्तम् ।
अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी
तौ संकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥ ४९५ ॥'

अत्र निगदेनैव व्याख्याते स्पष्टतयैवोपमायाः प्रधानत्वेन प्रतीतिः ॥

रसप्रशमयोरुपमासहोक्तिर्यथा—

'दृष्टे लोचनवन्मनाङ्मुकुलितं पार्श्वस्थिते चक्रव-
न्न्यग्भूतं बहिरासितं पुलकवत्स्पर्शं समातन्वति ।
नीवीबन्धवदागतं शिथिलतामाभाषमाणे ततो
मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ॥४९६॥'

अत्र कस्याश्चित्सखीविख्यातमानसंविधानकोपान्मानवत्याः प्रियसंदर्शनादालम्बनविभावादुत्पन्नप्रकृष्टरतिप्रभवे प्रहर्षस्थायिभावे तत्पार्श्वोपसर्पणादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पद्यमानेषु पुलकादिषु मुखात्मकेषु व्यभिचारिषु नयननिमीलनाधोमुख्यनीवीविस्रंसनादिभिरनुभावैः प्रकर्षणारोपणादानन्दरसतामापाद्यमाने स्थायिनि प्रबलविरोधिभावान्तरोदयादेतेभ्य एव कारणेभ्यः प्रतिक्षणमपचीयमानयोर्लज्जारोषयोः प्रशमसंकरावभिभूय प्राधान्येनोपमासहोक्तिः प्रकाशते ॥

---

१. 'संस्थां' क. २. 'पश्येत्युक्त्वा' क. ३. 'व्याख्यायते' क. ४. 'प्राधान्येन' घ. ५. 'तत्स्पर्शमातन्वति' ख. ६. 'रतिप्रभवहर्षस्थायिभावे' क., 'रतिप्रभवे प्रहर्षस्यापि भावे' ख. ७. 'तत्पार्श्वेऽपि समर्पणादिभिः' क. ८. 'उद्दीप्यमानेषु' क. ९. 'समुत्पद्यमानेषु' क. नास्ति. १०. 'पुलकादिषु समुत्पद्यमानेषु व्यभिचारिषु' क.ख. ११. 'विश्रंसनादिभिः' ख. १२. 'आनन्दरसानाम्' ख. १३. 'संकीर्यते' क.ख.

श्लेषाद्यलंकारसामर्थ्यात्तु क्वचिदवास्तवमपि रसाभाससंकरं कवयः प्रकल्पयन्ति[1] ॥

स रूपकश्लेषेण यथा—

'राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ ४९७ ॥'

अत्र बीभत्सो रसः श्लेषरूपकसामर्थ्यादविद्यमानेनापि शृङ्गाररसेन संकीर्ण इव प्रतीयते ॥

श्लेषानुविद्धार्थान्तरन्यासेन यथा—

'दट्ठोट्ठ[2] हो असिलअघाओ[3] देवि मउलावइ लोअणभउँहो[4] वे ।
सुपओहरकुवलअपत्तलच्छि[5] कह मोह णँ[6] जणइ ण लग्गवच्छि ॥'

[दष्टौष्ठ हो असिलताघातो देवि मुकलयति लोचनभ्रुवौ द्वे अपि ।
सुपयोधरकुवलयपत्रलक्ष्मीः कथं मोहं न जनयति न लग्ना वक्षसि ॥]

अत्र वीरो रसः श्लेषसामर्थ्यादविद्यमानेनापि विप्रलम्भशृङ्गारेण संकीर्यते ॥

---

१. 'वर्णयन्ति' क., 'कल्पयन्ति' ख., २. 'अस्यार्थस्तत्र वीररसे तावत्—हो इत्याश्चर्यसंबोधने । दष्टौष्ठअसिलताघातः खड्गप्रहारस्तवापि मुकुलयति लोचनभ्रुवौ द्वे अपि । अथ च सुष्ठु पान्ति ये योधास्तान् रात्यादत्ते तादृशानेव महावीरान्स्वीकरोति ईदृशी या कुवलयप्राप्ता सकलमेदिनीमण्डलप्राप्ता लक्ष्मीः कथं मोहं न न जनयति । लग्ना वक्षसि काका जनयत्येवेत्यर्थः । अपि च विप्रलम्भशृङ्गारे हे दष्टौष्ठ पीताधरामृत भोगशीलक, घातः अर्थात्तव प्राणसमाया नखाघातोऽपि ते तव मुकुलयति लोचनभ्रुवौ द्वे अपि अथ च सुष्टुपयोधरौ स्तनौ यस्याः सा । कुवलयपत्रलाक्षी नीलोत्पलदलसमाननयना न लग्ना वक्षसि कथं न मोहं न जनयति । अपि तु जनयतीत्यर्थः । सहृदयहृदयंगम ।' घ. टिप्पणी. ३. 'असिलवाअच्चाओ' ख. ४. 'लोअणभउवत्तो' क., 'लोअणभओहो' ग.घ. ५. 'कुवलअपत्तिलच्छि' क., 'कुवलय' ख., ६. 'कहमोनुभाइणगाजणवच्छि' क.

श्लेषोपमा यथा—

'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
　गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
　कामीवार्द्रापराधः स दहतु[1] दुरितं शाम्भवो वः शराग्निः ४९९'

अत्र करुणो रसः श्लेषोपमासामर्थ्येनाविद्यमानेनापि विप्रलम्भशृङ्गारेण संकीर्यते ॥

श्लेषव्यतिरेकेण यथा—

'पद्भ्यामूरुयुगं विभज्य भुजयोर्मध्यं निपीड्योरसा
　पार्श्वेषु प्रसभं प्रहृत्य नखरैर्दन्तैर्विलुप्याधरम्[2] ।
सुप्तानप्यवबोध्य युष्मदहितान्भूयोऽपि भुङ्क्ते[3] वने
　किं कान्ता सुरतैषिणी नहि नहि व्याघ्री करालानना ॥५००॥'

अत्र[4] श्लेषसामर्थ्यादपारमार्थिकी शृङ्गारप्रतीतिः[5] पारमार्थिकेन बीभत्सरसेन व्यावर्तमाना तद्धर्माणां मिथः संसर्गबुद्धिमुत्पादयति[6] ॥

श्लेषरूपकेण यथा—

'अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
　व्यक्तोत्तंसभृतः पिनह्य शिरसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिब-
　न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥५०१॥'

अत्र बीभत्सो रसः शब्दसामर्थ्याक्षिप्तेन शृङ्गाराभासेन संकीर्यते ॥

---

१. 'हरतु' ख.　२. 'विलुप्याधरम्' ख.　३. 'भुक्ते' ख. ४. 'इह' क.ख. ५. 'प्रतीतिः' घ. ६. 'संसर्गवद्बुद्धिम्' क.

समाधिरूपकेण यथा—

'शिखण्डे खण्डेन्दुः शशिदिनकरौ कर्णयुगले

दृशस्तारास्ताराश्चलमुडुपचक्रं च कुचयोः।

तडित्काञ्ची सन्ध्या सिचयरुचयः कालि तदयं

तवाकल्पः कल्पव्युपरमविधेयो विजयते ॥ ५०२ ॥'

अत्र भयानको रसः समाधिरूपकाद्युपकल्पिताकल्परामणीयकाक्षिप्तेन शृङ्गाराभासेन संकीर्यमाणः श्रोतुः प्रेयोरसाङ्गतां गच्छन्संगच्छते। एवमियमनेकप्रकारसंसृष्टिर्गुणालंकारसंकरप्रभवाभिमन्तव्या तत्रापि प्रधानाङ्गभावेन समकक्षतया च व्यक्ताव्यक्तोभयात्मकरूपास्तिलतन्दुलक्षीरजलाच्छायादर्शकादयो भेदा यथायोगमवगन्तव्याः। ते किं वक्तव्या न वक्तव्याः। कथमनुक्ता गम्यन्ते। उक्तेष्वेवान्तर्भावात्। तद्यथा—अर्थोभयालंकाराभिधाने 'खं वस्ते' इति 'चर्चां पारयति' इति विभक्तिमुद्रा, कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलम् इति पदमुद्रा च शब्दालंकारावपि संकीर्यमाणौ प्रतीयेते।

एवमन्यत्रापि।

**अङ्गाङ्गिभावावस्थानं सर्वेषां समकक्षता।**

**इत्यलंकारसंसृष्टेर्लक्षणीया द्वयी गतिः ॥ १७६ ॥**

तत्राङ्गाङ्गिभावेनावस्थानं यथा—

'आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम्।

कोषदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥ ५०३ ॥'

अत्रारविन्दानि 'मुग्धे तव मुखश्रियमाक्षिपन्तीति' उपमा, 'कोष-

---

१. 'अनेकप्रकारसंसृष्टिः' ख. २. 'तण्डुल' क.ख. ३. 'यथायोग्यं' ख. ४. 'संसृष्टिः' घ. ५. 'अतिदुष्करं' घ. ६. 'अत्र–' इत्यारभ्य 'दुष्करम्' इत्यन्तः पाठो ग.घ. नास्ति.

दण्डसमग्राणां किमेषामस्ति दुष्करम्' इति श्लेषोपसर्जनार्थान्तरन्यासः। भवन्ति[1] चारविन्दानि कोषदण्डसमग्राणि तेन[2] तेषां न किंचिदशक्यमस्ति कोषदण्डयोर्विजयसाधनत्वात् । एतेन श्लेषस्य साधन[3]भूतार्थसमर्थकत्वादुपमायास्तु प्रस्तुतसाध्यवस्तुविशेषकत्वादर्थान्तरन्यासं प्रत्यङ्गभावो विज्ञायते ।

सर्वेषां समकक्षतां यथा—

'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्[4]फलतां गता ॥ ५०४ ॥'

न[5]नु चाबन्धः समत्वात्स्यादिति कथं सर्वेषां तुल्यकक्षतया संबन्धोत्पत्तिः एवं मन्यते ये उत्प्रेक्षोपमादयोऽलंकारा विभावानुभावव्य[6]भिचार्यादिवर्णनापरतया रसादेरङ्गतां प्रतिपद्यन्ते तदा भवत्येव तेषां तुल्यकक्षतेति । तत्र 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः' इति [7]द्वे उत्प्रेक्षे, 'असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता' इत्युपमा च वर्णनीयस्य तमस उद्दीपनविभावभूतस्य समतयैवोत्कर्षप्रतिपादकत्वेनाङ्ग[8]भावमुपगतेति नास्ति लक्षणानुपपत्तिरिति । ननूपमा इमास्तिस्रोऽपि कस्मान्नोच्यन्ते । इवो हि वाक्यान्तरेषूपमाया एव दृश्यते । मैवं[9]म् । उपमानोपमेयशब्दप्रति[10]पन्नस्य सादृश्यार्थस्य द्योतनमिवेन क्रियते न च लिम्पतीत्यादावुपमानमुपमेयं वास्ति यत्सादृश्यद्योतनाय इवः प्र[11]युज्येत । न च तिङन्तेनोपमानमस्ति तस्य साध्यार्थाभिधायित्वेनासत्त्वार्थ[12]त्वात् ॥

---

१ 'प्रभवन्ति' क.ख. २. 'तेन किं तेषां' क.ख. ३. 'साधनमानभूतार्थं' ख. ४. 'विफलतां गता' क.ख. ५. 'ननु च तमसश्च नभसश्च असतश्च संबन्धसमत्वात्' क.ख. ६. 'व्यभिचारिवर्णनापरा' क.ख. ७. 'द्वे' ख. नास्ति. ८. 'प्रागभावम्' ख. ९. 'नैवम्' क. १०. 'उपमानोपमेयं प्रति यत्तस्य' ख. ११. 'प्रयुज्यते' ख. १२. 'असत्त्वार्थकत्वात्' ख.

तदाह—

'सिद्धस्य हि समानार्थमुपमानं विधीयते ।
तिङन्तार्थस्य साध्यत्वादुपमार्थो न विद्यते ॥'

न चोपमायामेवेवशब्दो भवति । तद्यथा कथमिवैतद्भविष्यति । अस्तु वा लिम्पतितमसोरुपमानोपमेयभावस्तथापि तुल्यधर्मो न दृश्यते य उपमानोपमेयभावाय प्रभवति । किमन्येन लेपनमेव भवति तर्हि लिम्पतिना[1] केन भाव्यम् । न हि लेपनं लिम्पेः पृथग्भवितुमीष्टे । ननु चेह द्वयं चकास्ति धातुर्लिम्पति तदर्थश्च[2] लेपनम् । मैवम् । एवं सति लिम्पतिरिवेति स्यात् न तु लिम्पतीवेति । अथ यथा राहोः शिरः इति भेदाभावेऽप्यवयवावयविभावस्तथेह धर्मधर्मिभावो भविष्यति । मैवम् । उपमानोपमेयभावस्य भेदसादृश्यप्रतिपत्तिनिबन्धनत्वात् तदभावेऽपि यस्तन्मनुते स कथं नोन्मत्तः स्यात् ।

तदुक्तम्—'स एव धर्मो धर्मी चेत्युन्मत्तोऽपि न भाषते ।' अस्तु तर्हि तिङाच्यः[3] कर्ता उपमानमिति चेत् न्यग्भूतोऽसौ क्रियापदे । कथं पुनरसौ क्रियापदे[4] न्यग्भूतो भवति । श्रूयतां, षडर्थास्तिङन्तेन प्रतीयन्ते क्रिया कालः उपग्रहः साधनं सङ्ख्या पुरुषश्चेति । तेषु क्रियाकालात्मनेपदपरस्मैपदनिमित्तानि प्रकृतिरभिधत्ते प्रत्ययः साधनं, सङ्ख्यां पुरुषं च । एतेषां तु क्रियार्थत्वात्क्रिया प्रधानं, कालात्मनेपदनिमित्ते क्रियाविशेषणत्वेन, सङ्ख्यापुरुषौ साधनविशेषणत्वेन तयोरेव न्यग्भवतः । साधनं पुनः 'प्रकृतिप्रत्ययौ[5] स्वार्थं[6] सह ब्रूतः' इति न्यायात् 'प्रधानभूतमपि भूतं भव्यायोपदिश्यत' इति न्यायेन क्रियासिद्धावुप-

---

१. 'नलिम्पतिना' क. २. 'शब्दार्थश्च' क. ३. 'तिङां यः' ख. ४. 'क्रियावयवे' ख. ५. 'प्रकृतिप्रत्ययार्थौ' ख. ६. 'यत्र सहार्थं ब्रूते' क.

न्व्यापारं परार्थं तस्यां क्रियायां न्यग्भवति । तेनायं कर्ता स्वक्रियासिद्धावाकुलः कथमुपमानत्वेनोपमेयत्वेन वान्यदपेक्षितुं क्षमते । एवं तर्हि योऽङ्गानि लिम्पति तेन क्रियोपलक्षितेन कर्त्रा तुल्यं तम इत्यर्थः प्रतिपत्स्यते । मैवम् । क्रियोपलक्षितस्य कर्तुरुपमानभूतस्य शब्दन्यायबलाप्रतिपत्तिः । शब्दो हि मुख्यागौणीलक्षणाभिरर्थप्रकरणादिसंपादितसान्निध्यादाभिस्तिसृभिरेव वृत्तिभिरर्थविशेषप्रतिपत्तिनिमित्तं भवति । तद्यथा—गौरित्ययं शब्दो मुख्यया वृत्त्या सास्नादिमन्तमर्थं प्रतिपादयति स एव तिष्ठन्मूत्रत्वादिगुणसंपदमपेक्ष्य वाहीकादौ प्रयुज्यमानो गौणीं वृत्तिमनुभवति । यदा तु मुख्यया गौण्या वोपात्तक्रियासिद्धौ साधनभावं गन्तुमसमर्थस्तदा लक्षणया स्वार्थाविनाभूतमर्थान्तरं लक्षयति यथा गङ्गायां घोषः प्रतिवसतीति गङ्गाशब्दो विशिष्टोदकप्रवाहे निरूढाभिधानशक्तिर्घोषकर्तृकायाः प्रतिवसनक्रियाया अधिकरणभावं गन्तुमसमर्थः स्वार्थाविनाभूतं तटं लक्षयतीति । न चैतासामिहान्यतमापि वृत्तिः संगच्छते । तथा हि लिम्पतेः क्रियावचनत्वान्न मुख्या । नापि क्रियाकर्त्रोरसादृश्येन शुक्तिकादौ रजतादिवत्तद्भावापत्तिः क्रियागुणानां कर्तर्यसंभवात् । साक्षादिव प्रयोगाच्च न गौणी क्रियायाश्च स्वयमेव धर्मरूपत्वात् । बुद्धिः पश्यतीतिवदन्यधर्माणामन्यत्राधिरोपणमुपचार इति न गौणीमेद उपचारिता । इवशब्दस्य चासादृश्येऽपि दर्शनान्न लक्ष्येत । यदि हीवशब्दः सादृश्यमेव विद्योतयति तदा लिम्पतिक्रियायाः सत्त्वभूतेन तमसा सादृश्यं न संभवतीति स्वार्थाविनाभूते कर्तरि-

---

१. 'स्वक्रियासिद्धा वा कुतः' ख. २. 'चान्यदपेक्षितं' क., 'वान्यदपेक्षितं' ख. ३. 'सान्निध्यादिभिः' क.ख. ४. 'यत्तटं' क. ५. 'क्रियावचनत्वान्मुख्या नापि क्रियाकर्तारः सादृश्येन' क. ६. 'उपचरिता' क., 'उपचरितः' ख.

माक्षिपति। न चेह लक्षितलक्षणाविरुद्धलक्षणादयोऽपि वर्तन्ते, यथा 'प्रिये जने नास्ति पुनरुक्तं', 'स्वल्पैरसावपि न दृश्यत एव कालैः' इति। न च शब्दन्यायविलङ्घिनी पदार्थव्युत्पत्तिः प्रेक्षावद्भिराद्रियते। यद्यप्यध्याहारादिभिरिदमपि स्यात्तथापि तुल्यधर्मो मार्गणीयस्तद्वदेव विप्रतिपत्तेः॥ न चेन्दुमुखादिवदनभिधीयमानस्यापि तुल्यगुणस्य प्रत्ययो भवतीति वाच्यम्।

यथेन्दुरिव ते वक्त्रमिति कान्तिः प्रतीयते।
न तथा लिम्पतेर्लेपादन्यदत्र प्रतीयते॥ १७७॥
तदुपश्लेषणार्थोऽयं लिम्पतिर्ध्वान्तकर्तृकः।
वर्षणार्थश्च विद्वद्भिरुत्प्रेक्ष्यत इतीक्ष्यताम्॥ १७८॥
मन्ये-शङ्के-ध्रुवं-प्रायो-नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः॥ १७९॥

वाक्यवदेव प्रबन्धेष्वनौचित्यपरिहारेण गुणालंकारसंकरनिवेशो भवति। तत्रानौचित्यपरिहारो यथा—मायया कैकेयीदशरथाभ्यां रामः प्रलम्भितो न मातापितृभ्यामिति निर्दोषदशरथे; राममेव योधयन् रामेण वाली निहतो न सुग्रीवेणेति महावीरचरिते; रुधिरप्रियराक्षसेन दुःशासनस्य रुधिरं पीतं न भीमसेनेनेति वेणीसंहारे; दुर्वाससोऽपध्यानाद्दुष्यन्तःशकुन्तलास्वीकारं विसस्मार, नानावस्थितितानुरागतयेति शाकुन्तले; लवणप्रयुक्तराक्षसाभ्यां वा सोपस्करेण तदभिधाय सीता परित्याजिता न कैकेयीमन्थराभ्यामिति छलितरामे; किंच दग्धायामपि

१. 'इह लक्षणाविरुद्ध—' ख. २. 'शब्दान्यविलम्बिनी' क., 'शब्दान्यपविलम्बितप्रायविलम्बिनी' ख. ३. 'तद्यथा' ख. ४. 'नानवस्थितानुरागतया' क.ख. ५. 'तदनभिधाय' ख. नास्ति.

वासवदत्तायां वैरप्रतिचिकीर्षया पद्मावती मयोढा, अवसिते च समीहिते त्वया विना क्षणमपि न जीवामीत्यविज्ञातवासवदत्तासंनिधेर्वत्सराजस्याग्निप्रवेशाध्यवसायः प्रियाहृदयतो व्यलीकशल्यमुत्खानेति तापसवत्सराजे; नीचाक्षः[1] स्वामिकार्यं साधयामीति प्रभुभक्त्या निरपराधामपि प्रेयसीं हित्वा स्वामिकार्यापेक्षयाहमेवैतावन्ति दिनानि जीवितः, अद्य तु कृतस्वामिकार्यस्तामेवानुगच्छामीति शिवगणः शूद्रकनिमित्तां मायामयीं चितां प्रियासमक्षं प्रविवेश, सापि तत्प्रेमावदानदर्शनापहृतप्रियव्यलीका[2] तद्वियोगकातरा तत्रैवात्मानं प्रतिचिक्षेपेति विक्रान्तशूद्रके, इति तदेतद्दोषहानम् ॥ गुणोपादानं तु सम्यग् गुणयोगेन संविधाने सुसूत्रता, अपि च चतुर्वृत्त्यङ्गसंपन्नमिति चतस्रो वृत्तयो भारती आरभटी कैशिकी सात्त्वती चेति । तत्र—

या वाक्प्रधाना नृपतिप्रयोज्या स्त्रीवर्जिता संस्कृतयाथ युक्ता[3] ।
स्वनामधेयैर्भरतप्रयोज्या सा भारती नाम भवेत्तु वृत्तिः ॥
यत्रावपातप्लुतलङ्घितानि छेद्यानि मायाकृतमिन्द्रजालम् ।
चित्राणि युद्धानि च तत्र वृत्तिमेतादृशीमारभटीं वदन्ति ॥
या श्लक्ष्णनेपथ्यविशेषयुक्ता स्त्रीसंगता या बहुगीतवृत्ता ।
कामोपभोगप्रचुरोपचारा तां कैशिकीं वृत्तिमुदाहरन्ति ॥
या सात्त्विकेनात्मगुणेन युक्ता त्यागेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभारा सा सात्त्वतीति प्रथितेह वृत्तिः ॥

आसामङ्गानि षोडश—तेषु प्ररोचना, वीथी, प्रस्तावना, प्रहसनमिति चत्वारि भारत्यङ्गानि ॥

१. 'मरीचाक्षः' ख. २. 'प्रियव्यलीकात्' ख. ३. 'संस्कृतया प्रयुक्ता' ख.

तत्र वक्तव्यार्थप्रशंसापरं वचः प्ररोचना; यथा—

'जयति भुवनकारणं स्वयम्भुर्जयति पुरन्दरनन्दनो मुरारिः ।
जयति गिरिसुतानिरुद्धदेहो दुरितभयापहरो हरश्च देवः ५०५

प्रस्तुतवस्तूपपादनावसरसूचकं वचः प्रस्तावना; यथा रत्नावल्याम् ।

'द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ५०६'

उद्घात्यकादीनामङ्गानां प्रवृत्तिः वीथी उद्घात्यकः कथोद्घातः प्रयोगातिशयः प्रवर्तकोऽवलगितमिति ।

तत्रोद्घात्यको यथा—

'को जयति जयति शर्वः केन जितं जितमनङ्गदहनेन ।
त्रिपुरारिणा भगवता बालशशाङ्काङ्कितजटेन ॥ ५०७ ॥'

कथोद्घातो यथा—

'सार्कं पङ्कजजन्मना सुरपतेरभ्यर्थनाया वशा-
दिक्ष्वाकोः शरदिन्दुबिम्बविमले वंशेऽवतीर्य स्वयम् ।
निःशेषात्तपदं त्रयीपथजुषां विद्वेषिणं राक्षसं
यः पौलस्त्यमहन् स पातु भवतो रामाभिधानो हरिः ५०८

प्रयोगातिशयो यथा—

'यूथायितैमवतु हरेः क्ष्मामुद्धरतो वराहवपुषो वः ।
शेषफणैरत्नदर्पणसहस्रसंक्रान्तबिम्बस्य ॥ ५०९ ॥'

---

१. 'त्रयीपदजुषां' ख. २. 'उत्थापितम्' क., 'अत्याहितम्' ख. ३. 'शेषफणा- रत्नदर्पण' क.ख.

प्रवर्तको यथा—

'आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष[1] विशुद्धकान्तः[2] ।
उत्खाय गाढतमसं घनकालमुग्रं
रामो दशास्यमिव संभृतबन्धुजीवः ॥ ५१० ॥'

अवलगितं यथा,—अमुमेव शरत्समयमाश्रित्य गीयताम्, तथा ह्यस्याम्[3]

'सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥ ५११ ॥'

स्वधर्मात्प्रचलितानां[4] तापसादीनामुपहासपरं वचः प्रहसनम् । यथा—

'श्रमणः श्रावकवध्वाः सुरतविधौ दशति नाधरं दत्तम् ।
मदिराक्षि मांसभक्षणमस्मत्समये निषिद्धमिति ॥ ५१२ ॥'

संक्षिप्तिका, अवपातः, वस्तूत्थापनम्, संस्फोटः, इति चत्वारि आरभट्यङ्गानि ॥

तेषु माहेन्द्रजालनेपथ्यादिभिर्वस्तुसंक्षेपः संक्षिप्तिका । यथा—

'रक्षसा मृगरूपेण वञ्चयित्वा सराघवौ ।
जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ॥ ५१३ ॥'

भयादिभिर्विद्रवादिकर्मानुप्रवेशनिर्गमनमवपातः । यथा—

'मृगरूपं परित्यज्य विधाय विकटं वपुः ।
नीयते रक्षसा तेन लक्ष्मणो युधि संशयम् ॥ ५१४ ॥'

१. 'एव' क. २. 'विशुद्धकीर्तिः' क.ख. ३. 'तथा ह्यस्याः' ख. 'तथा ह्यस्याम्' ख. नास्ति. ४. 'स्वधर्मविप्रचलितानाम्' क., 'स्वधर्मवित्प्रचलितानां' ख.

अविद्रवः सविद्रवो वा सर्वरसभावसमासो वस्तूत्थापनम्। यथा—

'राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम्।
आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मया-
त्क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तताम् ५१५'

नानास्त्रयुद्धनियुद्धादिभिः ससंरम्भसंप्रहारः संस्फोटः। यथा—

'कृष्टा येन शिरोरुहेषु पशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवा-
न्सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः॥५१६॥'

नर्म, नर्मस्फिजः, नर्मस्फोटः, नर्मगर्भ, इति चत्वारि कैशिक्यङ्गानि॥

तेषु स्थापितशृङ्गारं वचो विचेष्टितं वा सपरिहासं नर्म। यथा—

'वयं तथा नाम यथात्थ किं वदाम्ययं त्वकस्माद्विकलः कथान्तरे।
कदम्बगोलाकृतिमाश्रितः कथं विशुद्धमुग्धः कुलकन्यकाजनः ५१७'

प्रथमसंभोगे नवावस्थानं संभोगाश्रयवाक्यादि कर्म नर्मस्फिजः। यथा—

'प्राप्तासौ वृषपर्वणः प्रियसुता सङ्केतखण्डे नवे
वृष्टिः सेयमनम्बुदाऽमृतमयी गात्राणि मे सिञ्चति।
किं जानासि विनोदयिष्यति मनः संतप्तमेवाद्य मे
दुर्वात्येव निवर्तयिष्यति न भोस्तां देवयानीं प्रति॥५१८॥'

आविर्भूताभिलाषानुभावयोरकाण्डसंभोगभङ्गो नर्मस्फोटः। यथा—

'इतः परानर्भकहार्यशस्त्रान्वैदर्भि पश्यानुमता मयासि।
एवंविधेनाहवचेष्टितेन, त्वं प्रार्थ्यसे हस्तगता ममैभिः ५१९'

कार्यहेतोः स्वरूपविज्ञानादिप्रच्छादनं नर्मगर्भः । यथा—

'अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥५२०॥'

उत्थापकः, परिवर्तकः, संलापकः, संघात्यकः, इति चत्वारि सात्वत्यङ्गानि ।

तेषु परस्परीभूतार्थेषूत्थापनमुत्थापकः । यथा—

'प्रहर मम तु कार्यं प्राक्प्रहारप्रियोऽहं
मयि तु कृतविघाते किं विदध्याः परस्मात् ।
झटिति विततबह्वङ्गारभास्वत्कुठार-
प्रविघटितकठोरस्कन्धबन्धः कबन्धः ॥ ५२१ ॥'

प्रस्तुतार्थत्यागादन्यार्थभजनं परिवर्तकः । यथा—

'मुनिमभिमुखतां निनीषवो याः समुपययुः कमनीयतां गुणेन ।
मदनमुपदधे स एव ताभ्यो दुरधिगमा हि गतिः प्रयोजनानाम् ॥५२२॥'

सदसि नानावाक्यैर्मिथोऽधिक्षेपः संलापकः । यथा—

'कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।
तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते धारयैनम् ॥ ५२३ ॥'

कार्यमन्त्रानुभावदैवादिभिः संघातभेदः संघात्यकः । यथा—

'अपश्यद्भिरिवेशानं रणान्निववृते गणैः ।
मुह्यत्येव हि कृच्छ्रेषु संभ्रमाधिगतं मनः ॥ ५२४ ॥'

---

१. 'अपि तु' ख.

'चतुर' इत्यनेन शास्त्रीयलौकिकव्यवहारवेदिनो नायकस्य धर्मार्थकाममोक्षेषु वैचक्षण्यमुच्यते। 'उदात्त' इत्यनेन आशयविभूत्योराभिजात्ययौवनादीनां चोत्कर्षः प्रकाश्यते। चतुर्वर्गफलं प्रबन्धं को वा न बान्धवीयतीत्यनेन श्रोतॄणां रामादिवद्वर्तितव्यम्, न रावणादिवदिति विधिनिषेधनिबन्धनस्य प्रबन्धस्याभीष्टतमत्वमाख्यायते। 'मुखं प्रतिमुखम्' इत्यादिना पञ्चाङ्गं प्रबन्धशरीरमभिधीयते। तदङ्गानि चोपक्षेपपरिकरादीनि चतुःषष्टिरपि मुखादिष्वेवान्तर्भवन्ति। अतस्तद्वदेव पञ्चसंध्येकमपि वाक्यं प्रबन्धव्यपदेशमासादयति। तद्यथा—

'कथमपि कृतप्रत्यासत्तौ प्रिये' इति मुखम्, 'स्खलितोत्तरे' इति प्रतिमुखम्, 'विरहकृशया कृत्वा व्याजं प्रजल्पितमश्रुतम्' इति गर्भः, 'असहनसखीश्रोत्रप्राप्तिप्रसादससंभ्रमं विवलितदृशा' इति विमर्शः, 'शून्ये गेहे समुच्छ्वसितं समेतम्' इति निबर्हणम्। एतेन प्राचीनप्रबन्धार्थेऽपि एकवाक्योक्तेन प्रबन्धत्वमित्याख्यातं न भवति। तद्यथा—

'तुरगनिचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसा रोषात्प्लुष्टानपि प्रपितामहान्।
अगणिततनूतापस्तप्त्वा तपांसि भगीरथो
भगवति तव स्पृष्टानद्भिश्चिरादुददीधरत्॥ ५२५॥'

'अविस्तृतमसंक्षिप्तम्' इत्यनेन विस्तारभीरूणां कथारसविच्छेदशङ्किनां च चित्तमावर्ज्यते। 'श्रव्यवृत्तम्' इत्यनेन वृत्तान्तैराश्वासकादि-

---

१. 'प्रबन्धे' ख. २. 'निबन्धस्य' क. ३. 'तदा' क., '(मुहुः)' ख. ४. 'श्रव्यान्तैरित्यनेन' ख.

परिसमाप्तिरिति परिश्रान्ताः श्रोतार अश्वास्यन्ते, स्वर्गादिसंनिवेशादिवर्त्सं-दर्मे चाश्वादयो विभाव्यन्ते । 'पुरोपवने' इत्यादिना च देशकालपात्र-संपदुपवर्णनादालम्बनोद्दीपनविभावाः कथ्यन्ते । उद्यानसलिलक्रीडाद्यु-पलक्षणेन कामिनीनां दिवाचेष्टाः, मधुपानरतोत्सव इत्यनेन च रात्रिचेष्टा उच्यन्ते । विप्रलम्भा इत्यनेन चत्वारोऽपि प्रथमानुरागादयः परामृ-श्यन्ते । 'विवाहे' इत्युपलक्षणेन प्रथमानुरागो विवाहान्तः, मानः प्रेमान्तः, प्रवासः संगमान्तः, करुणः प्रत्युज्जीवनान्तः, प्रबन्धे कर्तव्या इत्युपदिश्यते । 'मन्त्रदूत' इत्यादिपुरुषकारायत्तसिद्धिसूचनेनाद्यूनतादि-निरासान्नायकस्य सत्त्वोत्कर्षः प्रकाश्यते । 'नावर्णनं नगर्यादेर्दोषाय' इत्यादिना तु पुरुषार्थसत्त्वोपकारित्वेन शैलर्तूद्यानचन्द्रोदयमधुपानरतो-त्सवादीनां मन्त्रदूतप्रयोगाजिनायकाभ्युदयादीनां च नियमेन प्रयोगः, शेषाणां तु प्रबन्धशरीरानुरोधेनेति प्रतिपाद्यते । 'गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम् । निराकरणम्' इत्यनेन गुणवता भाव्यं न गुणद्वेषिणेति ज्ञाप्यते । 'वंशवीर्यश्रुतादीनि' इत्यादिना पुनराभिजात्यौ-द्धत्यशौण्डीर्यवीर्योदयँ एव शत्रोर्वर्णनीया न त्ववच्छेदहेतवो न्याय्या-चरणविनयाद्य इति प्रत्याय्यते । 'धिनोति नः' इति स्वयमेव पक्षः श्रेयानिति ग्रन्थकारेण स्वाभिप्रायः प्रकाश्यते ॥

इति निगदितभङ्ग्यानङ्गसर्वस्वमेतद्
विविधमपि मनोभिर्भावयन्तोऽस्य भेदम् ।

---

१. 'विवाहा' क.ख. २. 'प्रबन्धः' ख. ३. 'पुरुषाकारायत्त' क. ४. 'सूचनेन द्यूततादिनिरासात्' ख. ५. 'पुरुषार्थसत्त्वोपकारकारित्वेन' क., 'पुरुषार्थसत्त्वोपकारित्वेन' ख. ६. 'मन्त्रदूतप्रयोगाद्यनायकाभ्युदयादीनां च' क., 'मन्त्रदूतप्रयोगातिनायका-भ्युदयादीनां च' ख. ७. 'शौटीर्यवीर्यादयः' क.ख. ८. 'खेदम्' क.

तदनुभवसमुत्थानन्दसंमीलिताक्षाः
परिषदि परितोषं हन्त सन्तः प्रयान्तु ॥ ५२६ ॥

यावन्मूर्ध्नि हिमांशुकन्दलभृति स्वर्वाहिनी धूर्जटे-
र्यावद्वक्षसि कौस्तुभस्तबकिता लक्ष्मीर्मुरद्वेषिणः ।
यावच्चित्तभुवस्त्रिलोकविजयप्रौढं धनुः कौसुमं
भूयात्तावदियं कृतिः कृतधियां कर्णावतंसोत्पलम् ॥ ५२७ ॥

इति श्रीमहाराजाधिराजश्रीभोजदेवविरचिते सरस्वतीकण्ठाभरणालंकारे रसविवेचनो नाम पञ्चमः परिच्छेदः ।

समाप्तोऽयं ग्रन्थः ।

शुभमस्तु ।



## (१) अष्टदलपद्मबन्धः—

कर्णिकायां न्यसेदेकं द्वे द्वे दिक्षु विदिक्षु च ।
प्रवेशनिर्गमौ दिक्षु कुर्यादष्टदलाम्बुजे ॥




याश्रिता पावनतया यातनच्छिदनीचया ।
याचनीया धिया माया यामायासंस्तुता श्रिया ॥

(द्वितीयपरिच्छेदे पृ. २७२ श्लोकः २८४)

## (२) द्वितीयोऽष्टदलपद्मबन्धः–

अष्टधा कर्णिकावर्णः पत्रेष्वष्टौ तथापरे ।
तेषां संधिषु चाप्यष्टावष्टपत्रसरोरुहे ॥




चरस्फारवरक्षार वरकारगरज्वर ।
चलस्फाल वलक्षालवल कालगलज्वल ॥

( द्वि. परि. पृ. २७३ श्लो. २८६ )

## (३) तृतीयोऽष्टपत्रबन्धः–

प्राक्कर्णिकां पुनः पर्णं पर्णाग्रं पर्णकर्णिके ।
प्रतिपर्णं व्रजेद्धीमानिह त्वष्टदलाम्बुजे ॥



नशशीशनवेभावे नमत्कामनतव्रत ।
नमामि माननमन ननु त्वानुनयं नयम् ॥

( द्वि. प. पृ. २७३ श्लो. २८८ )

(४) चतुष्पत्रकमलबन्धः—

कर्णिकातो नयेदूर्ध्वं पत्राकाराक्षरावलीम् ।
प्रवेशयेत्कर्णिकायां पद्ममेतच्चतुर्दलम् ॥




सासवात्वासुमनसा सा नता पीवरोरसा ।
सारधामैति सहसा साहसर्धसुवाससा ॥

(द्वि. परि. पृ. २७४ श्लो. २९०)

## (५) षोडशपत्रपद्मबन्धः—

गोमूत्रिकाक्रमेण स्युर्वर्णाः सर्वे समाः समाः ।
मध्ये मवर्णविन्यासात्पद्मोऽयं षोडशच्छदः ॥



नमस्ते महिमप्रेम नमस्यामतिमद्दम ।
क्षामसोम नमत्काम धाम भीम समक्षम ॥

(द्वि. परि. पृ. २७४ श्लो. २९२)

## (६) कविनामाङ्काष्टपत्रबन्धः—

निविष्टाष्टदलन्यासमिदं पादार्धभक्तिभिः ।
अस्पृष्टकर्णिकं कोणैः कविनामाङ्कमम्बुजम् ॥




रावावधाधिराज्या विसररसविद्याजवाक्क्ष्मापकारा
राका पक्ष्माभशेषा नयनननयनस्वाखया स्तव्यमारा ।
रामा व्यस्तस्थिरत्वा तुहिननहितुः श्रीः करक्षारधारा
राधा रक्षास्तु मह्यं शिवममवशिव्यालविद्यावतारा ॥

(द्वि. परि. पृ. २७५ श्लो. २९४)

## (७) नामाङ्कचक्रबन्धः–

पुरःपुरो लिखेत्पादानत्र त्रीन् षडरीकृतान् ।
तुर्यं तु भ्रमयेन्नेमौ नामाङ्कश्चक्रसंविधिः ॥




सत्त्वं मानविशिष्टमाजिरभसादालम्ब्य भव्यः पुरो
लब्धाघक्षयशुद्धिरुद्धुरतरश्रीवत्सभूमिर्मुदा ।
मुक्त्वाकाममपास्तभीः परमृगव्याधः सनादं हरे-
रेकौघैः समकालमभ्रमुदयीरोपैस्तदा तस्तरे ॥

(द्वि. प. पृ. २७६ श्लो. २९६.)

## (८) द्वितीयषडरचक्रबन्धः—




शुद्धं बद्धसुरास्थिसारविषमत्वं रुग्जयातिस्थिर-
भ्रष्टोद्धर्मरजःपदङ्गविगवाक्षीणेन चञ्चद्भ्रुवा ।
तथ्यं चिन्तितगुप्तिरस्तविधिदिग्भेदप्रचक्रं शुचा
चारो प्रांशुरदभ्रमुग्रतनुमे रम्यो भवानीरुचा ॥

(द्वि. प. पृ. २७६ श्लो. २९८)

## (९) तुरङ्गपदबन्धः–

क्रमात्पादचतुष्केऽस्य पङ्क्तिशः परिलेखिते ।
तुरङ्गपदयातेन श्लोकोऽन्य उपजायते ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| बा १ | ला३० | सु ९ | का२० | ल ३ | वा२४ | ला११ | का२६ |
| का१६ | न्ति | ला २ | ल २८ | क १० | ला२७ | लि ४ | ता२३ |
| स३१ | खा८ | सु१७ | त १४ | व २१ | ती ६ | सा२५ | रा१२ |
| द १८ | र्पि१५ | का३२ | व्र ७ | त २८ | ग १३ | र्धि | त ५ |

बालासुकालबालाकाकान्तिलालकलालिता ।
सखा सुतवती सारादर्पिकाव्रतगार्धित ॥
(द्वि. प. पृ. २७९ श्लो. ३०६)

अन्यश्च श्लोक:–

बाला लालिततीव्रखा सुकला रागतर्पिका ।
सुदन्तिका वर्धिता वा सा कालानललासका ॥
(द्वि. प. पृ. २७९ श्लो. ३०८)

## (१०) द्विचतुष्कचक्रबन्धः-

इह शिखरसन्धिमालां बिभृयादर्धं समाश्रितैर्वर्णैः ।
द्विचतुष्कचक्रबन्धे नेमिविधौ चापरं भ्रमयेत् ॥



जयदेव नरेन्द्रादे लम्बोदर विनायक ।
जगदे धनचन्द्राभालङ्घिदन्तविभाय ते ॥ (द्वि. प. पृ. २८० श्लो. २११

## (११) द्विशृङ्गाटकबन्धः-

शृङ्गाद् ग्रन्थिं पुनः शृङ्गं ग्रन्थिं शृङ्गं व्रजेदिति ।
द्विशृङ्गाटकबन्धेऽस्मिन्नेमिः शेषाक्षरं भवेत् ॥



करासङ्गवशेशंखगौरवस्य कलारसम् ।
संधाय वलयां शङ्कामगौरीं मेत्रनात्मक ॥ (द्वि. प. पृ. २८१ श्लो. २११)

## (१२) विविडितचक्रबन्धः–

शिखरादन्यतमाद्वै प्रतिपर्व भ्रमति रेखयाऽर्धम् ।
नेमौ तदितरमर्धं विविडितचक्राभिधे बन्धे ॥



सा सती जयतादत्र सरन्ती यमितात्र सा ।
सारं परं स च जयी शमिता स्यन्दनेन सा ॥

(द्वि. प. पृ. २८१ श्लो. ३१५)

## (१३) शरयन्त्रबन्धः–

चतुर्ष्वपि च पादेषु पङ्क्तिशो लिखितेष्विह ।
आदेरादेस्तुरङ्गस्य पादैः पादः समाप्यते ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| न | म | स्ते | ज | ग | तां | गा | त्र |
| स | दा | न | व | कु | ल | क्ष | य |
| स | म | स्ते | ज | स | तां | ना | त्र |
| मु | दा | म | व | न | ल | क्ष | य |

नमस्ते जगतां गात्र सदानवकुलक्षय ।
समस्तेऽजसतां नात्र मुदामवनलक्षय ॥

(द्वि प. पृ. २८२ श्लो. ३१७)

### (१४) व्योमबन्धः–

**अष्टादशशिखरचरीं गोमुत्रिकया चतुष्पदीं पश्येत् ।**
**यत्राद्यन्तैर्दृष्टां स ज्ञेयो व्योमबन्ध इति ॥**



कमलावलिहारिविकासविशेषवहञ्जनकाङ्क ।
ननगामिकरन्दिविसारमनारमणञ्जरताञ्ज ॥
तमसां बलहानिविलासवशेन वरञ्जनकान्त ।
ननमामि चिरं सवितारमनादिमहञ्जगताञ्ज ॥

(द्वि. प. पृ. २८२ श्लो. ३११)

(१५) मुरजबन्धः—

अत्र पादचतुष्केऽपि क्रमशः परिलेखिते ।
श्लोकपादक्रमेण स्याद्रेखासु मुरजत्रयी ॥




सा सेना गमनारम्भे रसेनासीदनारता ।
तारनादजना मत्तधीरनागमनामया ॥
(द्वि. प. पृ. २८३ श्लो. ३२०)

### (१६) एकाक्षरमुरजबन्धः–

श्लोकस्यैतस्य पादेषु लिखितेषु चतुर्ष्वपि ।
त्रिमृदङ्गकरीहस्याच्चतुरेकाक्षरावली ॥




सुराननत्वाननहाननघ्रये पुनस्तुवेऽनर्घधनप्रवाननम् ।
मनस्यनूनप्रधनप्रधूननं सकाननस्थाननदीननर्तनम् ॥

(द्वि. प. पृ. २८३ श्लो. ३२१)

## (१७) मुरजप्रस्तारः—

क्रमेणैवास्य पादेषु प्रसृतेषु चतुर्ष्वपि ।
तुर्यान्मुरजमार्गेण श्लोकोऽयमुपजायते ॥




तालसारप्रभाराका तारकापतिदंसिता ।
मारधामरमाधीता बलयामास सागरम् ॥
(द्वि. प. पृ. २८३ श्लो. ३२२)

## (१८) पादगोमूत्रिकाबन्धः—

गतिरुच्चावचा यत्र मार्गे मूत्रस्य गोरिव ।
गोमूत्रिकेति तत्प्राहुर्दुष्करं चित्रवेदिनः ॥

कां न्पु म न स्त पी ता
क्ष लो त या न डि नि
व स्थ च्छ्रि र ञ्च पी ता

कांक्षन्पुलोमतनयास्तनपीडितानि
वक्षस्थलोच्छ्रितरयाञ्चनपीडितानि ।
पायादपायभयतो नमुचिप्रहारी
मायामपास्य भवतोऽम्बुमुचां प्रसारी ॥

( द्वि. प. पृ. २८४ श्लो. ३२४ )

---

प्रस्तारः

## (१९) अर्धगोमूत्रिका—

मो द्वि व स पू य ता म र स भा सि
न रा रा सु ने
त भ व्या रि दा य सा र ल य भा वि

नमो दिवसपूराय सुतामरसभास्विने ।
नतभव्यारिदाराय सुसारलयभाविने ॥

अत्र गोमूत्रिकाश्लोकोऽयमुत्तिष्ठति—

नतदिव्यासदाराय सुसामलयभास्विने ।
नमो भवरिपूराय सुतारसयभाविने ॥

( द्वि. प. पृ. २८८ श्लो. ३३६,३३७ )

श्रीः ।

# सरस्वतीकण्ठाभरणस्योदाहरणानुक्रमणिका ।

According to Col. Jacob's Index to Quotations' at the India Office Library, London, with modifications to suit this edition.



१. गा० स० ४-७३. २. काव्याद० २-२९०. ३. गा० स० ५-९३. ४. गा० स० ६-७०. ५. काव्याद० २-७१. ६. शार्ङ्गधरपद्धत्यां मिशानारायणस्य. ७. कुमार० ७-२८. ८. शिशु० ४-१२.

१. गा० स० १-५७. २. काव्याद० ३-९१. ३. किराता० ८-२६. ४. शिशु० ५-१५. ५. विक्रमो० २-७. ६. कुमार० ८-६३. ७. काव्याद० २-६७. ८. काव्याद० २-२८४. ९. गा० स० ३-४९. १०. गा० स० २-२९. ११. गा० स० ६-२.

१. गा० स० २-१२. २. गा० स० २-५०. ३. गा० स० ७-७५. ४. काव्याद० २-२५०. ५. विद्धशालभ० १-१९. ६. कुमार० ४-२५. ७. किराता० १३-३०. ८. किराता० १२-१. ९. रघुवं० ३-७०. १०. कुमार० ५-३०.



१. रघुवं० १३-१. २ गा० स० ३-३६. ३. कुमार० ५-८६. ४. चौरपं० १२. ५. मेघसंदे० १-१४. ६. उत्तर-राम० १-३९. ७. काव्याद० ३-९०. ८. काव्याद० २-२०१. ९. काव्याद० २-२४७. १०. काव्याद० १-८७. ११. रघुवं० १८-४८. १२. शाकुन्त० २-१०. १३. किराता० ३-५. १४. शाकुन्त० १-२४.

१. ध्वन्या० १-१३. २. किराता० २-५४. ३. विक्रमो० ३-१३. ४. शाकुन्त० ७-१९. ५. रघुवं० ६-३५. ६. महावीरच० १-२६. ७. मालती० ५-१८. ८. मञ्जीरस्येति सुभाषितावलिः. ९. शिशुपा० २-४४. १०. वामनका० ३-२-१०. ११. काव्याद० २-२९३. १२. किराता० १५-२. १३. उत्तर० ६-२६. १४. रघुवं० ९-६७. १५. काव्याद० २-२००.



१. शिशुपा० १६-२. २. औचित्यविचारचर्चायां मालवरुद्रस्य. ३. काव्याद० २-१८३. ४. रघुवं० ७-२२. ५. काव्याद० २-१९१. ६. रा० श्रीविजयपालस्येति सुभाषिता० ७. भट्टकपर्दिनः इति सुभाषिता० मल्लिनाथस्येति भोजप्र० ८. विक्रमो० ३-११. ९. नमिसाधो रुद्रटकाव्या० वृत्तौ पृ. १४६. १०. मालती० ९-५. ११. किराता० १८-९. १२. काव्याद० २-२३६.

१. कुमारदासस्येति औचित्यविचारचर्चा. २. कुमार० ५-१५. ३. काव्याद० २-१९७. ४. कुमार० ५-८२. ५. रत्नाव० २-१७. ६. मालती० १-३१. ७. गा०स० १-२० ८. काव्याद० ३-८९. ९. रुद्रटका० ८-३०. १०. काव्याद० २-९१. ११. गा० स० ४-८६. १२. गा० स० १-८७. १३. भट्टि० १०-६.



१ मालती० ३-१६. २. रुद्रटका० ७-६०. ३. सेतुब० ३-१७. ४. गा० स० ३-७१. ५. कुमार० ३-५३. ६. शाकुन्त० १-२२. ७. गा० स० १-२१. ८. कुमार० १-३१. ९. मालती- मा० ४-३०. १०. काव्याद० २-१७८. ११. काव्याद० २-२११. १२. मालतीमा० २-११. १३. काव्याद० १-८२.

१. मालतीमा० ९-५५. २. शाकुन्त० ४-२६. ३. किराता० ५-३३. ४ विक्रमो० १-९. ५. गा० स०४-१८. ६. गा० स० ५-२०. ७. उत्तर० २-१७. ८. नमिसाधो रुद्रटकाव्यालंकारवृत्तौ ६. २१. ९. काव्याद० २-२१९. १०. भट्टि० ४-४.

१. गा०स० ५-७३. २. गा०स०१-२२. ३. काव्याद० २-३६१. ४. महाभारते आदिप. ९८-११. ५ काव्याद०२-१७२. ६. काव्याद० २-२६७. ७. विक्रमो० २-३. ८. काव्याद०१-८४. ९. धनिकस्य दशरूपके. ४-१३. सार्ङ्गधरप० अद्भुतपुण्यस्य. १०. शाकुन्त० ६-१७.

१. कुमार० ३-५४. २. मालतीमा० ३-४. ३. उत्तरराम० १-३७. ४. शिशु० १०-६४. ५. मालती० ३-५. ६. मेण्ठकर्तृकहयग्रीववधस्य इति सुवृत्ततिलके. ३-१६. ७. किराता० १५-४. ८. शार्ङ्गधर० राजशेखरस्य. ९. धनिकस्य दशरूपके. २-४. १०. रघुवं० ७-६७. ११. शाकुन्तल० ६-८.



१. कुमार० २-५५. २. नीतिशतके० ७७. ३. रघुवं० ९-९९. ४. किराता० १५-२९. ५. उत्तरराम० १-१. ६. काव्या० २-२८९. ७. विक्रमो० २-६. ८. पूर्वार्धम्, काव्याद २-७८. ९. काव्या० २-२९१. १०. रघुवं० ६-६५. ११. सुभाषिताव० शार्ङ्गध० १२. बालराम० १-४२. १३. धनिकस्य दशरूपके. महानाटके च ३-२३. १४. उत्तर० १-३८.

१ कुमार० ४-२०. २. कुमार० ५-५३. ३. शिशु० ४-६०. ४. सेतु० ४-४३. ५ मालती० १०-४. ६. गा०स० ३-७५. ७. गा०स० ४-८२. ८. काव्याद० २-११८. ९. रुद्रटकाव्यालं० ७-५५. १०. काव्यादर्श० ३-१३६. ११. वेणीसंहार० १-२. सुभाषितावलौ भट्टनारायणस्य, शार्ङ्गधरपद्धतौ च निशानारायणस्य.

१. शाकुन्त० ४-१४. २. महावीर० १-२१. ३. मेघसं० १-२३. ४. काव्याद० २-३४९. ५. वामनका० ४-२-२. ६. शार्ङ्गधरपद्धतौ बाणस्य. ७. काव्याद० २-२५१. ८. सुभाषिताव० विज्जिकायाः. ९. शाकुन्त० ३-१२. १०. कुमार० १-३२. ११. मुद्रारा० १-२१. अस्य प्राकृतं वर्तते. १२. काव्या० ३-५२.

१. शिशुपा० ३-८. २. कुमार० ६-८२. ३. सेतु० ६-८१. ४. गा० स० ६-७७. ५. वाक्पतिकवेर्गौडवहो-नाम्नि प्राकृतकाव्ये ६-९०. ६. ब्रह्म-बिन्दूपनिषद् १२. ७. काव्याद० २-३२८. ८. अमरु० १-१८. ९. रघु० १२-४५.

१. गा० स० १-८६. २. गा०स० १-२५. ३. धनिकस्य दशरूपके २-९. ४. कुमार० ६-८४. ५. काव्या० १-५३. ६. मालती० १०-१२. ७. विक्रमो० १-१९. ८. गा० स० १-१७. ९. महावी० १-४३. १०. काव्याद० ३-१८३.

---

१. काव्याद० ३-५९. २. काव्याद० ३-५६. ३. शार्ङ्गधरपद्धतौ छिन्नमस्य। ऑफ्रैक्टपण्डितस्तु छिन्नम इति। गणरत्नमहोदधावस्य चित्तप इति नाम। ४. रामायणे सुन्दरकाण्डे ३४-६ ५. रघुवं० ६-१३. ६. गा० स० ६-७५. ७. ध्वन्यालोके १-४. ८. शाकुन्त० ३-१. ९. रघुवं० १६-८.

---

१. वामनकाव्यालं० २-२-२२. २. अमरु० १०१. ३. पादत्रयम्, काव्याद० २-५०. ४. काव्याद० १-६४. ५. शाकुन्त० ५-३०. ६. वामनकाव्यालं० २-२-४. ७. उत्तरार्धं काव्याद० ३-१५३. ८. गा० स० १-१५.

१. रुद्रटकाव्या० २-१५. २. वामनकाव्या० २-२-४. ३. भल्लटस्य ३९. भदन्तस्येति ऑफ्रैक्टपण्डितः. सुभाषितावलौ, शार्ङ्गधरपद्धतौ च ज्ञानवर्मणः. ४. गा० स० ४-७०. ५. सुभाषि० विकटनितम्बायाः. ६. वे० सं० २-१६. ७. काव्याद० २-२६. ८. वामनका० २-१-८. ९. सुभाषि० भामहस्य.



१. शार्ङ्गधरप० भोजराजस्य. २. रुद्रटकाव्या० ८-५०-. ३. उत्तररा० ३-५. ४. काव्याद० २-१२३. ५. शिशुपा० ११-६४. ६. उत्तररा० ४-१९. ७. ध्वन्यालोके १-१७. ८. रत्नावली २-१०.

१. रघुवं० १५-१. २. शिशुपा० ४-२३. ३. वेणीसं० ३-४२. ४. काव्याद० २-३३९. ५. कृष्णकर्णामृतकाव्ये २-६४, औचित्यविचारचर्चायां चण्डकस्येति क्षेमेन्द्रः, हेमचन्द्रस्य काव्यानुशासनेऽप्युदाहृतमिदं पद्यम्. ६. शिशुपा० १०-५४. ७. प्रथमचरणमात्रं, धनिकस्य दशरूपके. ८. शिशुपा० १४-६६. ९. काव्याद० २-३५४. १०. काव्याद० १-४८.



१. अमरुश० ३८. २. शिशुपा० १०-३. ३. कुमारसं० ४-२४. ४. अमरुश० ७१. ५. विक्रमोर्वशीये ४-३३-३४. ययातिचरित्रस्येति काव्यप्रकाशटीका काव्यकौमुदी. ६. विक्रमो० ४-३३-३४. ७. रघुवं० ८-३७. ८. काव्याद० ३-८५. ९. शिशुपा० ५-५०.

१. अमरुश० २. २. गा० स० २-८३. ३. किराता० १५-३. ४. काव्याद० ३-१११. ५. गा० स० ३-९९. ६. महावीरच० ५-५१. ७. काव्याद० २-१४१. ८. मेघदू० १-३८. ९. काव्याद० २-१४७. १०. शिशुपा० ३-६७. परं तत्र 'द्विपैः—' इति पाठः. ११. काव्याद० २-२४८.

१. सेतुब० १-१५. २. रुद्रटकाव्या० ८-७८. ३. किरातार्जु० १७-६३. ४. गा० स० ६-४५. ५. शाकुन्त० २-६. ६. गा० स० १-७०. ७. कुमार० ३-३८. ८. शिशुपा० ७-१८. ९. काव्याद० २-३०१. १०. काव्या० १-८६.

१. उत्तरराम० ३-४०. २. गा० स० २-१००. ३. गा० स० ५-९६. ४. विद्धशालभ० १-३. ५. गा० स० २-८. ६. गा० स० २-९३. ७. शिशुपा० १०-६३. ८. किराता० १५-५०. ९. भट्टिः १०-१५.



१. पञ्चस्तवी १-१०. २. काव्याद० १-४९. ३. काव्याद० २-२३८. ४. गा० स० ३-१३. ५. कादम्बरी-कथा० ८-८०. ६. कादम्बरीकथासारे नास्ति. ७. नमिसाधोष्टीकायां रुद्रटकाव्या० ८-२८. ८. काव्याद० २-१९४. ९. काव्याद० २-२७१. १०. रुद्रटकाव्या० ४-१९.

१. काव्याद० २-९९. २. शिशुपा० ३-५१. ३. शाकुन्त० २-९. ४. महावीर० १-९, उत्तरराम० ४-२०. ५. गा० स० ६-७६. ६. सुभाषि० चण्डकस्य, शार्ङ्गधर० क्रीडाचन्द्रस्य. ७. गा० स० ५-८१. ८. गा० स० ४-७३. ९. गा० स० १-६५.



१. शिशुपा० १९-३४. २. गा० स० ४-७८. ३. गा० स० ३-१२. ४. मालतीमा० ९-४. ५. जैमिनिसूत्रवृत्तिः (मीमांसा) १-१-३२. ६. सुभाषिता० ४-९९.

१. गा० स० ३-९३. २. सेतुब० ५-१०. ३. गा० स० ४-५१. ४. गा० स० १-८८. ५. सेतुब० ११-११९. ६. उत्तररा० ५-२४. ७. सुभाषिता०, शार्ङ्गधरप० निद्रादरिद्रस्य. ८. विद्धशालभ०. ९. सुभाषितावलौ भारवेः, परं किरातार्जुनीये न प्राप्यते. १०. रघुवं० १२-८९. ११. गा० स० २-६.



१. गा० स० ४-७१. २. सेतुब० १-१. ३. गा० स० २-४७. ४. गा० स० १-२८. ५. गा० स० ३-७४. ६. गा० स० ६-६४. ७. गा० स० १-९६. ८. गा० स० २-४८.

१. सेतुब० १-४२. २. कुमार० ५-८५. ३. महाभारते द्रोणपर्वणि ८-४०८. ४. कुमारसं० ५-५५. ५. रघुवं० ५-८५. ६. गा०स० ७-४८. ७. मालतीमा० ३-१. ८. बालरामा० २-१७८, विद्धशालभ० १-१४.

१. मालतीमा० ४-८. २. महावीरच० ३-२४. ३. महेन्द्रः २-४८८. ४. रघुवं० ७-२३. ५. विद्धशा० ३-२७, बालरामा० ३-२५. ६. काव्याद० ३-४१. ७. रुद्रटकाव्या० ११-१३. ८. शिशुपा० ९-६. ९. काव्याद० २-१८. पूर्वार्धमात्रम्. १०. कुमारसं० ३-१६६. ११. काव्याद० ३-१८०.

१. मेघदू० १-५२. २. ध्वन्यालोके २-२५. ३. कुमारसं० १-५०. ४. रघुवं० ६-१२. ५. वामनकाव्या० ४-२-७. ६. महावीरच० २-१४. ७. काव्याद० २-६९. ८. रघुवं० ७-१२. ९. गा० स० १-५. १०. गा० स० ३-८८.



१. रघुवं० ८-९५. २. कुमारसं० ३-७३. ३. शाकुन्त० ६-२. ४. शाकुन्त० ३-१७. ५. उत्तररा० ६-२३-२. ६. वामनकाव्या० २-२-१२. ७. शिशुपाल० ६-४. ८. कुमार० ६-३६, उत्तरार्धं च श्रीमद्भागवते ३-२०-१९. ९. सेतुब० ३-९. १०. सेतुब० २-४५. ११. शूद्रकस्येति सुभाषितावलिः, परं मृच्छकटिके नास्ति.

१. विक्रमोर्व० ४-३९. २. काव्याद० २-१९०. ३. काव्याद० २-१९३. ४. वामनकाव्या० ३-२-१३. ५. उत्तररा० १-४३. ६. मेघदू० १-४७. ७. मेघदू० २-४४.

१. कर्पूरमञ्जरी १-२५. २. काव्याद० ३-११०. ३. उत्तररा० ६-१८. ४. कुमारसं० ३-३७. ५. किरातार्जु० ५-७. ६. बृहदारण्यकं ५-२-३. ७. गा० स० ७-२४. ८. कुमारसं० ८-११, हेमचन्द्रस्य काव्यानुशासने च. ९. शाकुन्त० २-१३. १०. शाकुन्त० ६-२०, 'सुखमनुभवतः' इति M. Williams, and Pischel. ११. उत्तररा० ३-३१. १२. काव्याद० २-२९६.

१. रघुवं० ८-२९. २. गा० स० ७-९१. ३. सुभाषितावलौ. ४. भट्टप्रभाकरस्येत्यौचित्यविचारचर्चायां क्षेमेन्द्रः. ५. कुमार० १-२५. ६. काव्याद. २-४९. ७. कादम्बरी १८. ८. उत्तररा० १-३२. ९. गा० स० ६-४२.



१. रघुवं० १३-७२. पर 'अज्ञात-बन्धु'–इति पाठः. २. रत्नावली २-१. ३. रत्नाव० २-?. ४. नागानन्दे ३-३५. ५. धनिकस्य दशरूपके २-१९ ऑफैक्ट्मने विज्जकायाः. ६. शार्ङ्गधरप० ७. अमरुश० १९. ८. काव्याद० १-९०.

१. किराता० १५-२५. २. काव्याद० ३-९३. ३. महावीर० १-२५. ४. काव्याद० ३-१८२. ५. काव्याद० २-३१२. ६. किराता० १५-४३. ७. भट्टिः १०-११. ८. रत्नावली १-७. ९. काव्याद० २-१३७. १०. काव्याद० ३-७२.

१. सेतुब० २-१४. २. सेतुब० ५-७. ३. सेतुब० १-१९. ४. मेघदू० ५. ५. सेतुब० ५-१९. ६. वेणीसं० ३-४१. ७. रघुवं० ८-६६. ८. रघुवं० ८-४९. ९. काव्याद० २-३२४.

१. काव्याद० २-३२५. २. किराता० १५-१४. ३. पूर्वार्धमात्रं काव्याद० २-३६. ४. काव्याद० २-३२६. ५. काव्याद० ३-५७. ६. काव्याद० २-८३. ७. काव्याद० ३-८८. ८. काव्याद० २-३२७.



१. हेमचन्द्रस्य काव्यानुशासनेऽपि. २. धनिकस्य दशरूपके. २-३७. ३. शार्ङ्गधरप०. ४. अमरुश० १०५. ५. मालतीमा० २-३. ६. काव्याद० २-२८२. ७. रघुवं० ७-२५. ८. वामनस्य काव्यालंका० ३-११३. ९. काव्याद० २-२१८. १०. प्रथमपादमात्रं बालरामा० १-४०. ११. कुमारसं० ५-३३.

